# ॥ अथ वाल्मीकीयरामायणं प्रारभ्यते ॥

इसका रजिस्टरी सब हक यन्त्रालयाधिकारीने स्वाधीन रक्खा है

(१०)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# धन्यवादः ।

सन्तु कोटिशस्तस्यानन्तजगदुत्पादकस्य भगवतः श्रीरामचन्द्रस्य धन्यवादाः । यस्य पवित्राणि चरित्राणि निखिलैहिकामुष्मिकचतुर्विधपरमपुरुषार्थसार्थसंसाधकानि भवन्ति। तस्य च भूतभाविवर्तमानानिःशेषगुणगणगुम्फनैकनिपुणो भगवान्महर्षिर्वाल्मीकिर्नाम सकलजगज्जनपावनैकपरायणतया रामायणनाम्ना प्रसिद्धं चरित्रकाव्यप्रबन्धं निबबन्ध । सैषा हि श्रीरामचन्द्रकीर्तिरक्षरानिबद्धा भुवनत्रयं पवित्रयति "कीर्तिरक्षरसंबद्धा पुनाति भुवनत्रयम् । " इति काव्यादर्शप्रामाण्यात् । अतश्च "स्वयं तरन्नन्यांश्च तारयति" इति शास्त्रोपलक्षितादिकाव्यरचनगुरुलक्षणाय भगवत्प्रेमरसविचक्षणाय जगज्जननीजानकीदेवीसुरक्षणदक्षिणाय सच्छिष्यकुशलवशिक्षणप्रख्यातविलक्षणावलक्षभूरियशसे काव्यरचनाचतुराय भगवते वाल्मीकये सन्तु शतशो धन्यवादाः । यदीयां काव्यरचनां गुरूकृत्य भूतलेऽस्मिन्वृत्तनिबन्धनपुरःसरकाव्यरचनासरणिरप्रतिहता सर्वतः प्रसृतास्ति। तदेतच्छ्रीमद्वाल्मीकीयरामायणमद्यावधि सर्वैरपि परमपवित्रतया पण्डितजनैर्नित्यनियमविहितप्रबन्धादिवाचनावसरे पापठ्यमानं श्रोतृजनसमाजैः शोश्रूयमाणं च दरीदृश्यते । श्रीवाल्मीकीयरामायणपाठशीलानां प्रवासादिपुस्तकभारजन्यदुःखनिराकरणाय लघुरूपेणेदं पुस्तकं मुद्रितम् । अस्त्वतो भक्तसज्जनसुखाय ममायं परिश्रमः सफलः ।

खेमराज श्रीकृष्णदास-"श्रीवेङ्कटेश्वर" (स्टीम्) यन्त्रालयाध्यक्षः-मुंबई-स्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## श्रीमद्वाल्मीकीयरामायणप्रधानविषयानुक्रमणिका रसिकजनानामनुसन्धानसौकर्याय संग्रहेण प्रकाश्यते ।

### अथ बालकाण्डस्थविषयानुक्रमणिका १.

सर्गाः । विषयाः ।

१ गुणवीर्यधर्मकृतज्ञतादिमहात्म्यगुणविशिष्टालौकिकपुरुषरत्नाजिज्ञासायां वाल्मीकिं प्रति तादृशगुणयुक्तो राम इति नारदोत्तरपुरस्सरं संक्षिप्तरामायणकथावर्णनम् ।

२ अथ तीर्थाभिषेकप्रस्थितवाल्मीकेर्मध्येमार्गे क्रीडासक्तक्रौञ्चमिथुनात्पुंस्क्रौञ्चहन्तृव्याधवैशस्यसन्तप्ततन्मुखनिस्सृत–'मा निषाद' इति–पद्याविर्भावमुग्धस्य तस्यैव समक्षं ब्रह्मागमनम्, मम च्छन्देनैव त्वन्मुखोद्गतभारतीनिर्मितोऽयं श्लोकोऽसंशयं विरचय रामकथा हस्तामलकवदुपस्थास्यति श्रीरामचरित्रं तवान्तःकरण इति तस्मै ब्रह्मवरदानञ्च ।

३ अथ प्राचीनाग्रदर्भोपविष्टवाल्मीकेश्चेतसि समस्तरामकथास्फुरणम् ।

४ अथ श्रीवाल्मीकिप्रसादाभ्यस्तरामायणीयसप्तकाण्डगतचतुर्विंशतिसहस्रश्लोकयोः कुशलवयो रामप्रासादे तद्गानद्वारा रामादिश्रोतृमुग्धीकरणम्, तेभ्योऽनेकपारितोषप्राप्तिश्च ।

५ अथ मनुसगरादिमहामहिमराजर्षिनिर्देशपुरस्सरं दशरथपालितायोध्याविभववर्णनम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

६ अथ अयोध्यावासिनां विभववर्णनपुरस्सरं तत्सच्चारित्र्याकुतोभयादिसौराज्यप्रशंसनम् ।

७ अथ दशरथमहाराजस्य धृष्टयाद्यष्टामात्यवशिष्ठवामदेवाद्यृत्विङ्मन्त्रिसाचिव्यतः शत्रुमित्रोदासीनेषु धर्मन्यायमयप्रकृतिपरिपालनम् ।

८ अथ यथाधर्मं राष्ट्रमनुशासतो दशरथस्य पुत्रोत्पत्तये वशिष्ठादिसम्मत्याऽश्वमेधविचारः ।

९ अथ सुमन्त्रेण सनत्कुमारमुखश्रुतदशरथराजापत्याविषयककथाकथनम्, ऋष्यश्रृंगापरपर्यायकाविभाण्डकसून्वानयनेनांगदेशीयरोमपादराजापचारजन्यानावृष्टिशान्तिप्रहृष्टतद्राजेन स्वतनयायाः शान्तायास्तस्मै दानाय स्वीकृतिः प्रथितप्रभावः स एवर्ष्यश्रृंगस्त्वदपत्यार्थं यागं कारयत्विति च दशरथाय सुमन्त्रमन्त्रः ।

१० अथ रोमपादसम्मत्या तत्पुरोहितादिष्टगणिकानां विविधफलमधुरान्नगीतवादित्रश्रावणवशीकृतर्ष्यश्रृंगस्य तत्पुरप्रापणसमकालमेव पर्जन्यप्रवृत्त्यादिसुभिक्षं राज्ञा च तस्मै शान्तादानम् ।

११ अथ ऋष्यशृङ्गरचितपुत्रकामेष्टया दशरथस्य पुत्रचतुष्टयलाभ इति सनत्कुमारकथितकथाश्रवणेन दशरथस्य स्वपुरं प्रति ऋष्यशृङ्गानयनम् ।

१२ अथ तस्य ऋष्यशृङ्गवसिष्ठादिभिः सह चिकीर्षिताश्वमेधसंकल्पमश्वविमोचनं च ।

१३ अथ तस्य तुरगविमोचनमारभ्य संवत्सरे पूर्णे देवयजनं प्रति प्रस्थानम्, वसिष्ठस्य सुमन्तार्त्विक्प्रभृतीन् प्रति यज्ञौपयिककार्यनियोजनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

१४ अथ तस्याश्वमेधानुष्ठानं सप्रकारम् ।

१५ अथ दशरथप्रार्थितेन ऋष्यशृंगेण पुत्रकामेष्टिकरणम्, तद्व्याजेन साधुलोकरक्षणाय भूमाववतितीर्षोर्भगवत आनुषंगिकदुष्कृतविनाशाय देवैः प्रार्थनं च ।

१६ अथ सर्वज्ञस्यापि भगवतो देवसंघबहुमानाय तत्सकाशाद्रावणवधोपायश्रवणम्, वैतानिकाग्नेर्दिव्यपायसपात्रहस्तस्य प्राजापत्यपुरुषस्योत्थानम्, दशरथेन तत्सकाशात् पायसप्रतिग्रहणम्, कौसल्यादिभ्यः क्रमेण तत्प्रदानम्, तासां गर्भधारणं चादर्शयत् ।

१७ अथावतरिष्यतो भगवतः सहायार्थं वानरादिसृष्ट्यै देवान् प्रति ब्रह्मणो नियोजनम्, तथैव देवैर्वानरसृष्टिः, वानराणां भगवत्साहाय्योपयुक्तशौर्यादिसमृद्धिवर्णनम् ।

१८ अथ भगवतः सपर्यङ्कस्य सहेतिराजस्य श्रीरामादिरूपेणावतारः, लक्ष्मणादीनां विशेषतः श्रीरामभद्रस्य च कल्याणगुणाः, तेषां जातकर्माद्युपनयनान्तसंस्कारकरणम्, तत्समये विश्वामित्रागमनवर्णनम्।

१९ अथ स्वयागरक्षणव्याजेन रामादीन् कन्यारत्नैर्युयोजयिषोर्विश्वामित्रस्य दशरथं प्रति रामलक्ष्मणाभ्यर्थनम् ।

२० अथ कौशिकवचनश्रवणाद्रामविश्लेषचिन्तया दशरथविषादः ।

२१ अथ रामप्रेषणवृत्तान्तव्याकुलस्य राज्ञो वशिष्ठेन प्रतिबोधनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

तलं भूमेः खननप्रकारः, तेषां दिग्गजाष्टकदर्शनपूर्वकं कपिलसकाशे अश्वदर्शनम्, कपिलाभिभवनप्रवृत्तिः, तदैव तेषां कपिलेन भस्मीकरणम् ।

४१ अथ सगरपौत्रेणांशुमता सविनयं कपिलसेवनेन तत्सकाशस्थिताश्वानयनम्, सगरस्य यज्ञसमाप्तिः, सुपर्णोक्तनष्टस्वपुत्रगणोत्तरणौपयिकगङ्गानयनशक्त्यैव तस्य स्वर्गगमनम् ।

४२ अथांशुमद्दिलीपयोर्गङ्गानयनाशक्त्यैव स्वर्गगमनम्, ततो भगीरथस्य गङ्गानयनाय तपश्चरणम्, प्रसन्नेन ब्रह्मणा तस्य वरप्रदानम्, रुद्रशिरोऽवतरणमुखेन गङ्गाया भूम्यानयनानियोजनम् ।

४३ अथ पुनर्भगीरथतपःप्रसन्नेन रुद्रेण शिरसा विष्णुपदीवहनम्,बिन्दुसरसि तस्या विसर्जनम्,गङ्गा-स्रोतःसु सप्तस्वेकस्य भगीरथरथानुगमनम्, तस्य च मध्ये जह्नुना तिरोभावनम्, पुनर्विसर्जनम्, तेन सगरसुतगणशरीरभस्मराशिसंप्लावनम्, ततः सागराणां स्वर्गगमनवर्णनम् ।

४४ अथ ब्रह्मणा गङ्गाया भागीरथीव्यपदेशनियोजनम्, भगीरथं प्रति पित्र्यसलिलदाननियोजनम्, भगीरथस्य पितॄन् प्रति सलिलदानम्, गङ्गावतरणश्रवणमाहात्म्यकथनम् ।

४५ अथैषां गङ्गावतरणपूर्वकं विशालाख्यनगरीसमीपगमनसमये तत्रत्यराजवंशं पृष्टेन विश्वामित्रेण तद्देशीयपूर्ववृत्तान्तमपि वक्तुकामेन तदुपयुक्ततया क्षीरोदमथनलब्धविष्णुदत्तामृतप्राशनेन सदेवसंघस्येन्द्र-स्याखिलासुरविध्वंसनपूर्वकं त्रिलोकीसाम्राज्यं कथितम् ।

४६ अथ हतपुत्राया दितेरिन्द्रजेतृपुत्रलाभाय विशालपुरसमीपे सहस्रसंवत्सरं गर्भिण्यास्तपश्चरणम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　विषयाः ।

रन्ध्रान्वेषिणेन्द्रेण तस्याः परिचरणम्, मध्याह्नेऽपवित्रतया सुप्तायास्तदुदरं प्रविष्टेन तेन सप्तधा गर्भच्छेदनम्, पुनस्तस्याः प्रसादवर्णनम् ।

४७ अथ दितेः सप्तानां गर्भच्छेदानां सप्तवायुस्कन्धरूपेणेन्द्रसकाशाद्वरलाभः, अलम्बुसायामिक्ष्वाकूत्पन्नेन विशालाख्येन राज्ञा विशालानगरनिर्माणम्, तद्वंशं च तदानींतनसुमत्याख्यराजपर्यन्तं रामाय कथितवन्तं कौशिकं स्वपुरमागतं सुमतिरपूजयादित्याह ।

४८ अथैषां मिथिलोपकण्ठे शून्याश्रमगमनसमये तद्वृत्तान्तं रामेण पृष्टः कौशिकस्तत्र पूर्वं गौतमस्य तपश्चरणम्, अहल्याया इन्द्रेण धर्षणम्,ततो गौतमस्य स्वपत्न्यामहल्यायामदृश्यतया शापश्चाह, रामागमनसमये तन्मोक्षणम्, इन्द्रे निर्वृषणत्वेन शापं चोत्सृज्य हिमवत्प्रान्तगमनप्रस्तावः ।

४९ अथ पितृदेवदत्तमेषवृषणेनेन्द्रस्य वृषणलाभः, कौशिकाच्छ्रुतवतो रामस्य सकौशिकस्य गौतमाश्रमे शापविमुक्तयाहल्यया गौतमेन च पूजनम्, मिथिलागमनञ्च ।

५० अथ सरामलक्ष्मणस्य कौशिकस्य जनकयज्ञशालाप्रवेशः, जनकेन पूजनम्, तस्मै विश्वामित्रेण रामलक्ष्मणयोरहल्याशापमोचनधनुर्जिज्ञासापर्यन्तवृत्तान्तकथनम् ।

५१ अथ मातृशापविमोचनश्रवणजातानन्देन शतानन्देन विश्वामित्रमाहिमकथां जिगदिषता पुरा राजभावेनावस्थितस्य विश्वामित्रस्य ससैन्यस्य वसिष्ठाश्रमगमनम् ।

५२ अथ वसिष्ठेन विश्वामित्रस्य ससैन्यस्यातिथ्यकरणप्रयत्नप्रस्तावः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

५३ अथातिथ्यदृष्टकामधेनुमहिम्नो विश्वामित्रस्य वसिष्ठसकाशे मधुरोपक्रमेण निर्बन्धान्तेन वस्तुविनिमयप्रश्नक्रमेण कामधेनुप्रार्थनं कथितम् ।

५४ अथ विश्वामित्रेण बलात्कारेण कामधेनुकर्षणम्, तत्कुपितया वसिष्ठप्रहितया कामधेन्वा बलसृष्टिवर्णनम् ।

५५ अथ कामधेनुसृष्टबलेन विश्वामित्रसैन्यनाशः, वसिष्ठेन विश्वामित्रसुतशतभस्मीकरणम्, ततो निर्दर्पस्य विश्वामित्रस्य पुनश्चिरकालानुष्ठिततपोविशेषप्रसन्नरुद्रदत्तनिखिलास्त्रवर्गस्य वशिष्ठाश्रमनिरोधनकथनम् ।

५६ अथ निखिलास्त्रग्रासदृष्टब्रह्मतेजोविशेषस्य तादृशब्रह्मतेजःसंपादनेच्छा ।

५७ अथ विश्वामित्रस्य तादृशब्राह्मण्यसंपादनाय दक्षिणस्यां दिशि तपश्चरणम्, तत्समये त्रिशंकोः सशरीरं स्वर्गं जिगमिषतो वसिष्ठप्रत्याख्यातस्य तत्पुत्रसकाशे तादृशस्वर्गार्थयजनप्रार्थनाप्रस्तावः ।

५८ अथ वसिष्ठपुत्रैरपि प्रत्याख्यातस्य त्रिशंकोस्तादृशस्वर्गार्थयजनाय विश्वामित्रशरणागतिः ।

५९ अथ विश्वामित्रस्य त्रिशंकुयजनार्थं शिष्यान् प्रति नानादेशवास्तव्यब्राह्मणानयननियोजनम्, महोदयवासिष्ठोक्तस्वनिन्दावचनश्रवणेन महोदयादिषु शापोत्सर्जनवर्णनम् ।

६० अथागतैर्ब्राह्मणैः सह विश्वामित्रस्य त्रिशंकुयजनोपक्रमः, आवाहितदेवानागमकुपितस्य तस्य तपोमहिम्ना त्रिशंकोः स्वर्गगमनम्, पुनरिन्द्रेण निपात्यमानस्यान्तरिक्षे स्थापनम्, नवीननक्षत्रसप्तार्षिसृष्टिः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।   विषयाः ।

तादृशदेवसृष्टिप्रयत्नचकितप्राचीनदेवसंघदत्तवरबलेन स्वसृष्टनक्षत्रवीथ्यामेव त्रिशंकुस्वर्गानुभवानियोजनम्, तद्यज्ञसमाप्तिवर्णनम् ।

६१ अथ विश्वामित्रस्य पश्चिमायां दिशि तपश्चरणम्, तत्समये अम्बरीषस्य यज्ञीयपशुविनाशप्रायश्चित्तार्थं नरपशुतया शुनःशेपं गृहीत्वा गमनम् ।

६२ अथ विश्वामित्रस्य शुनःशेपादेशतया स्वपुत्रानियोजनम्, तदनंगीकुर्वाणेषु तेषु शापदानम्, उपायान्तरेण शुनःशेपरक्षणम् ।

६३ अथ विश्वामित्रस्य पुष्करेषु तपस्यतो मेनकासंगसंभवो विघ्नः, ततोऽस्य पुनः प्रबुद्धस्य तीव्रतपसा ब्रह्मणः सकाशात् महर्षित्ववरलाभः, पुनरस्मिन् ब्रह्मर्षित्वं प्रति प्रयस्यति सति देवैस्तद्विघटनाय रम्भानियोजनप्रस्तावः ।

६४ अथ विश्वामित्रस्य रम्भां शप्त्वा पश्चात्तापमुपगतस्य दृढनिश्चयपूर्वकं सहस्रसंवत्सरतपश्चरणदीक्षा ।

६५ अथ विश्वामित्रस्य पूर्वदिशि सहस्रवर्षपर्यन्तं तपश्चरणम्, तदन्ते बुभुक्षोर्भिक्षुरूपेणेंद्रेणान्नयाचनम्, तदन्नं तस्मै दत्त्वाऽभुक्त्वैव पुनः घोरतपसा तुष्टेन ब्रह्मणा ब्रह्मर्षित्वप्राप्तिकथनम् ।

६६ अथ विश्वामित्रेण सह धनुर्दर्शनाय राघवागमनं प्रतिवेदितस्य जनकस्य धनुर्माहिमकथनपूर्वकं धनुर्वरं पूरयिष्यते राघवाय सीताप्रदानप्रतिज्ञावर्णनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

६७ अथ राघवेण धनुर्भञ्जनम्, जनकेन स्वचिकीर्षितसीताप्रदानवृत्तान्तज्ञापनेन दशरथानयनायायोध्यां प्रति दूतप्रेषणप्रस्तावः ।

६८ अथ दशरथस्य दूतमुखेन श्रुतजनकाभिप्रायस्य वासिष्ठादिभिरालोच्य मिथिलागमननिश्चयवर्णनम् ।

६९ अथ दशरथस्य मिथिलागमनम्, जनकेन समागमश्च ।

७० अथ जनकेन संबन्धार्हत्वाय वासिष्ठेनेक्ष्वाकुसंतानकीर्तनम् ।

७१ अथ वसिष्ठेन वरवंशकीर्तनपूर्वकं वधूवरणे कृते जनकस्य स्ववंशविशुद्धताज्ञापनपूर्वककन्यादानप्रतिज्ञा ।

७२ अथ विश्वामित्रेण भरतशत्रुघ्नार्थे कुशध्वजसुताद्वयवरणं रामादीनां गोदानमंगलकरणवर्णनम् ।

७३ अथ रामलक्ष्मणभरतशत्रुघ्नानां सीतोर्मिलामाण्डवीश्रुतकीर्तिभिर्विवाहमहोत्सववर्णनम् ।

७४ अथायोध्यां प्रति प्रस्थाने मध्येमार्गं जामदग्न्यागमनम् ।

७५ अथ भार्गवेण रामभग्नधनुःप्रसंगवशात्पीताम्बरकृत्तिवाससोर्मिथो विरोधेन युद्धारम्भे भगवता सधनुर्हस्तरुद्रस्तम्भनेन देवानां सर्षिगणानां पुरुषोत्तमे सर्वाधिकत्वनिश्चयकथनपूर्वकं तादृशभगवत्परिगृहीतस्वधनुःपूरणाभ्यर्थनवर्णनम् ।

७६ अथ जामदग्न्यगर्वनिर्वापणम् ।

७७ अथ स्वपुरं प्राप्य सीतया रामः सुखमुवास ।

एवं बालकाण्डसर्गाणां प्रधानविषयाणामनुक्रमणिका प्रदर्शिता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

## अथायोध्याकाण्डविषयानुक्रमणिका २.



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

२१ अथ लक्ष्मणोक्तरामवनवासानङ्गीकारवचनश्रवणलब्धनिश्चितधैर्यया कौसल्यया प्रार्थितस्य रामस्य कौसल्यासान्त्वनलक्ष्मणसमाधानप्रतिपादनम् ।

२२ अथ रामेण लक्ष्मणस्य दैवबलप्रदर्शनेन कैकेयीविषयकरोषोपशमनोपपादनम् ।

२३ अथ लक्ष्मणेन पुनर्दैवस्य निरसनायितां पौरुषस्यैवावलम्बनीयतां चावलम्ब्य विस्तरेणोपन्यस्तस्य पूर्वपक्षस्य रामेण धर्ममार्गमवलम्ब्य संग्रहेण सिद्धान्तप्रदर्शनम् ।

२४ अथ रामस्य धर्ममार्गे दृढाध्यवसायं समीक्ष्य कौसल्यया कथंचिद्वनवासाभ्यनुज्ञानप्रतिपादनम् ।

२५ अथ कौसल्यया विस्तरेण कृतमङ्गलाशासनस्य रामस्य कौसल्याभ्यनुज्ञापूर्वकं स्वगृहं प्रति प्रस्थानकथनम् ।

२६ अथ स्वगृहं गतस्य रामस्य सीतायै स्ववृत्तान्तकथनम्, ततः शोचन्त्याः सीताया गृहे स्थापनाय समुदाचारः शिक्षणं च ।

२७ अथ रामं प्रति सीतया विस्तरेण स्ववननयनप्रार्थनं तस्या रामेण संग्रहेण समाधानकथनम् ।

२८ अथ रामेण पुनः सीतायै विस्तरेण वनदोषप्रदर्शनम् ।

२९ अथ वनस्य दोषान् बलवदाश्रयेण गुणतयोपपादयन्त्या सीतया पुनः स्ववनगमनाभ्यर्थनम्, रामेण सान्त्वनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

३० अथ पुनः सीतायाः प्रणयरोषेण परिक्षेपपूर्वकं भाविविश्लेषासहनेन महति शोकेऽनुभूयमाने ततः कथंचिद्रामेण तद्वननयनमङ्गीकृत्येष्टजनेभ्योऽर्थदानाभ्यनुज्ञा ।

३१ अथ लक्ष्मणस्य स्ववनगमनाभ्यर्थनम्, रामेणानङ्गीकरणम्, पुनः सनिर्बन्धप्रार्थनेन तस्यापि वननयनाङ्गीकरणम्, वसिष्ठसद्मनि क्षिप्तायुधजातानयनाय प्रेषणम्, पुनरागतस्य तस्य यात्रादानाय सुयज्ञादिब्राह्मणानयनानियोजनम् ।

३२ अथ रामाज्ञया लक्ष्मणकृतं वसिष्ठपुत्राय सुयज्ञायाङ्गदादिभूषणदानम्, पर्यङ्कदानम्, मातुलदत्तशत्रुञ्जयाख्यकुञ्जरदानम्, अगस्त्यकौशिककौशल्योपाध्यायादिभ्यो नानारत्नसुवर्णरजतगवादिदानम्, चित्ररथाख्याय सूताय रत्नवस्त्रगवादिविश्राणनम्, कठकलापेभ्यो माणवकेभ्यो रत्नपूर्णाशीत्युष्ट्रशालिवाहसहस्रद्विशतमहावृषभगोसहस्रावितरणम्, कौशल्यानुवर्तनपरबटुसंधेभ्यः प्रत्येकं गोसहस्रदानम्, गृहरक्षिणामनुचराणां बहुधनप्रदानपूर्वकं गृहरक्षानियोजनम्, ततो महतो धनराशेर्बालवृद्धद्विजातिजनेभ्यो भूरिदानम्, त्रिजटाय सकुटुम्बमागताय तत्क्षिप्तदण्डपातपर्यन्तगोवृन्ददानं, तत्प्रसादनम्, तस्याशीर्वचनञ्च ।

३३ अथ रामस्य सीतालक्ष्मणानुगमनविज्ञापनाय पितरं द्रष्टुं लक्ष्मणसीतामात्रानुगतस्य वीथ्यां पादचारेण गमनसमये पौराणां तादृशरामदशादर्शनविघूर्णितमानसानां रामादीनुद्दिश्य बहुविधशोकवचनम्, ततः पितृसमीपं गतस्य तस्य सुमन्त्रमुखेन राज्ञे स्वागमनविज्ञापनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

३४ अथ सुमन्त्रविज्ञापितरामागमनस्य चिरकालदुर्लभरामदर्शनायानीताखिलेष्टदारादिजनस्य राज्ञो रामेण वन्दनपूर्वकं वनगमनानुज्ञामार्थितस्य कथंचिदनुज्ञादानम्, शोकेन मूर्छनमित्यादिकथनम् ।

३५ अथ कैकेयीपारुष्यदर्शनकुपितेन सुमन्त्रेण तन्मातृवृत्तान्तादिकथनपूर्वकं भर्त्सनसान्त्वने, तावतापि कैकेय्या अक्षोभप्रस्तावः ।

३६ अथ राज्ञा रामानुगमनाय सेनापरिजनधनधान्यकोशादिनियोजनम्, तदसहमानया कैकेय्या रामस्यासमञ्जसवत्प्रेषणवचनम्, तदसहमानेन सिद्धार्थनाम्ना मन्त्रिप्रधानेनासमञ्जदोषरामनिर्दोषताप्रदर्शनपूर्वकं कैकेयीविनिन्दनकथनम् ।

३७ अथ रामेण परिजनादिनिवारणपूर्वकं चीरखनित्राद्यर्थनम्, ततो रामलक्ष्मणयोः कैकेयीदत्तचीरधारणम्, स्वयं चीरधारणासमर्थायाः सीतायाः रामेण तद्बन्धनसमये वसिष्ठेन तत्प्रतिषेधपूर्वकं कैकेयीविनिन्दनम्, सीताया रामतुल्यशीलाभिकांक्षाया चीराविसर्जनम् ।

३८ अथ सीतायाश्चीरधारणपर्यन्तदुर्दशादर्शनक्षुभितहृदयैर्जनैर्धिक्कारेण दशरथस्य कैकेयीं प्रति नानाविधकृपणवचनपूर्वकं भुवि पतनम्, तदवस्थं तं प्रति रामस्य कौसल्यारक्षणप्रार्थनम् ।

३९ अथ सुदुःखितराजाज्ञया रामस्य वनगमनाय सुमन्त्रेण रथानयनम्, राजाज्ञप्तकोशाध्यक्षानीतदिव्यभूषणाम्बरालंकृतां वनवासं प्रति प्रस्थितां सीतां प्रति कौसल्यया पातिव्रत्यधर्मशिक्षणम्, सीतया तदनुमोदनम्, रामस्य कौसल्यादिमातृजनानुज्ञापनवर्णनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

४० अथ राजानं प्रदक्षिणीकृत्य सुमित्रानुज्ञातेन लक्ष्मणेन सीतया च सह सुमन्त्रानीतं रथमारुह्य वनं प्रस्थितं रामं पौरेष्वनुगच्छत्सु यावच्छक्त्यनुगमनेन विषण्णयोः कौसल्यादशरथयोर्मन्त्रिवचनेन गमननिवृत्तिकथनम् ।

४१ अथ रामस्य वनगमनेनान्तःपुरस्थराजस्त्रीजनविलापः, अयोध्यानगरसंक्षोभश्च ।

४२ अथ रामदर्शनेन भुवि परिलुठतो मूर्छितस्य पुनर्लब्धसंज्ञस्य कौसल्यादिदत्तहस्तावलम्बनस्यान्तःपुरं तत्र च कौसल्यागृहं प्रविष्टस्य राज्ञः शोकातिरेकवर्णनम् ।

४३ अथ राज्ञः समीपवर्तिन्याः कौसल्यायाः पुत्रशोकातिशयः, पुना रामागमनमनोरथः पुनः शोचनं च ।

४४ अथ सुमित्रया कौसल्याश्वासनम् ।

४५ अथ बहुशो निवर्तनप्रयत्नेऽप्यनिवर्तमानैः पौरैः सह रामस्य तमसातीरे तद्रात्रौ निवासकथनम् ।

४६ अथ जलमात्रकृताहारेण लक्ष्मणं प्रति पितृमातृवृत्तान्तकथनयापितत्रियामायामत्रयेण रामेण लक्ष्मणसुमन्त्राभ्यामालोच्य पौरान् वञ्चनेन विसृज्य गमनम् ।

४७ अथ सूर्योदयानन्तरं रामेण वञ्चितानां पौराणां शोकेनायोध्यागमनप्रस्तावः ।

४८ अथ रामेण शून्यामयोध्यां निरीक्ष्य पौराणां शोचनं विस्तरेण वर्णनम् ।

४९ अथ रामस्य नानाग्रामक्षेत्रनदीदर्शनपूर्वकं पुनरागमनादिमनोरथपूर्वकं च कोसलदेशातिक्रमणम् ।

५० अथ दर्शनीयतमं स्वविवासनासहनसमुदीरितनानाविलापवचनजनभरितं कोसलदेशमतिक्रान्तस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　　　विषयाः ।

रामस्यातिरमणीयपुण्यतमभागीरथीतीरगमनम्, गुहेन समागमः, तत्रेङ्गुदीमूले सीतया सह भूमौ शयनम्, लक्ष्मणगुहाभ्यामभितो रक्षणं च ।

५१ अथातिसुकुमारदिव्यदेहयोः सीतारामयोरतिकठिनस्थण्डिलशयनमन्वीक्ष्य पितृमातृप्रभृतींश्चोद्दिश्य गुहसमक्षं लक्ष्मणस्याप्रभातमनुशोचनम् ।

५२ अथ पुनः प्रातः श्रीरामप्रबोधितलक्ष्मणाज्ञप्तगुहनावारोहणसमये रामस्य मातापितरावुद्दिश्य विस्तरेण सन्देशवचनम्, सुमंत्रस्य स्वविश्लेषासहनेनानुशोचतः समाश्वासनम्, गुहानीतन्यग्रोधक्षीरेण जटाकरणम्, गुहाभ्यनुज्ञानम्, नावा गङ्गातरणम्, अतिदूरमार्गगमनेन खिन्नानां सीतारामलक्ष्मणानां कथंचिद्वत्सदेशानतिक्रम्य सायंकाले मृगादिमांसेन कृताहाराणां कुत्रचिद्वनस्पतिमूले रात्रौ वासाय गमनम् ।

५३ अथ रामस्य लक्ष्मणाभिप्रायजिज्ञासया स्वविवासनमुद्दिश्य नानाविधानुशोचनम्, लक्ष्मणं प्रत्ययोध्यागमननियोजनम्, पुनस्तदभिप्रायज्ञेन लक्ष्मणेन रामसमाश्वासनपूर्वकं सीतायाः स्वस्य च क्षणमपि रामविश्लेषे सत्ताविनाशकथनेन दुस्त्यजत्वोपपादनम्, अथ तादृशमहारण्यमध्ये पर्णशय्यायां निर्भयानां त्रयाणां शयनम् ।

५४ अथ रामादीनां पुनः सूर्योदयानन्तरं गंगायमुनासङ्गमे प्रयागे भरद्वाजाश्रमगमनम्, भरद्वाजेन तेषामर्घ्यादिभिरभिपूजनम्, रामेणैकान्तस्थलप्रश्ने भरद्वाजेन चित्रकूटाख्यगिरेस्तादृशस्थलत्वेन कथनम्, पुनः प्रभाते भरद्वाजेन चित्रकूटरामणीयककथनवर्णनम् ।

२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

५५ अथ प्रस्थितान् रामादीन् प्रति भरद्वाजेन मंगलाशासनपूर्वकं चित्रकूटमार्गं कथयित्वा निवर्तनम्, ततस्तेषां चित्रकूटं प्रति प्रस्थितानां प्लवेन कालिन्दीमुत्तीर्य वनरामणीयकदर्शनपूर्वकं सायंकाले मृगमांसेन कृताहाराणां यमुनावने निवसनकथनम् ।

५६ अथ पुनः सूर्योदयानन्तरं गमनसमये सीतां प्रति वनशोभादर्शनकुतूहलातिक्रान्तमार्गेण रामेण लक्ष्मणेन चित्रकूटप्रान्ते वाल्मीक्याश्रमे वाल्मीकिसेवनम्, सलक्ष्मणेन रामनियुक्तेन पर्णशालाकरणम्, गृहप्रवेशाङ्गवास्तुबल्यर्थं समित्पुष्पमांसादिसंपादनम्, अथ रामेण वास्तुशान्तिं कृत्वा सीतालक्ष्मणाभ्यां सह तत्र सुखेन चिरं निवसनम् ।

५७ अथ गुहप्रेषितचारमुखेन रामस्य चित्रकूटगमनपर्यन्तं वृत्तान्तं विज्ञाय सुमन्त्रस्यायोध्यागमनम्, रामं विना गतं सुमन्त्रमुद्वीक्ष्यायोध्याजमानुशोचनम्, कौसल्यानिवेदितसुमन्त्रागमनवृत्तान्तस्य दशरथस्य शोकातिशयेन मूर्च्छनम् ।

५८ अथाश्वस्तं दशरथं प्रति रामोक्तसमाश्वासनरूपसंदेशकथनम्, लक्ष्मणोक्तरामविवासनमूलकक्रोधोक्तिकथनम्, किमप्यन्तर्निगूह्य वक्तुमशक्तया वैदेह्या सबाष्पनेत्रयां स्थितमिति सीतास्थितिकथनम् ।

५९ अथ सुमन्त्रेण राज्ञे रामविवासनायुक्तत्वसूचनाय रामविश्लेषणायोध्यिकानिखिलचराचरजन्तुपारिम्लानकथनम्, तच्छ्रावणेन दशरथस्य पश्चात्तापेन मूर्च्छनम् ।

६० अथ सुमन्त्रमुखश्रुतरामवृत्तान्तायाः कौसल्यायाः शोकातिरेकः, सुमन्त्रेण तस्याः समाश्वासनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

६१ अथ पुरा राजानं प्रति कौसल्यायाः पुत्रविवासनप्रयुक्तो विलापः, तच्छ्रवणेन राज्ञो मूर्च्छनं च ।

६२ अथ लब्धसंज्ञेन राज्ञा कौसल्यासान्त्वनम् , ततः कौसल्यायाः स्वोक्तवाक्यकटुत्वनिमित्तं राजक्षमापणम् , ततो रात्र्यां शोकेन राज्ञो निद्रापारवश्यवर्णनम् ।

६३ अथ मुहूर्तात् प्रबुद्धेन राज्ञा कौसल्यां प्रति पूर्वं कदाचिद्रात्रौ सरय्वां जलमाददानः कश्चिदृषिपुत्रो मया मृगयां पर्यटता गजभ्रान्त्या हत इत्यादिवृत्तान्तः कथित इति प्रस्तावः ।

६४ अथ ऋषिशापात् पुत्रशोकेन स्वस्य मरणं सिद्धमिति कथयतो राममेवानुशोचतो दशरथस्यार्धरात्रे मरणम् ।

६५ अथ परेद्युः प्रातरागतसूतमागधादिप्रबोधनेनाप्रबुद्धे राज्ञि परीक्षया राजमरणं निश्चित्य रुदन्तीभिरिताभिरन्तःपुरस्त्रीभिः सह प्रबुद्धयोः कौसल्यासुमित्रयोर्मृतं राजानमुद्दिश्य रोदनकथनम् ।

६६ अथ विस्तरेण कौसल्यायाः कैकेयीविनन्दनरामगुणस्तवनतिलतण्डुलितः प्रलापः, पश्चादमात्यैः पुत्रमानीय राजसंस्कारं चिकीर्षद्भिस्तैलद्रोण्यां राज्ञः प्रक्षेपः, राजस्त्रीणां कैकेयीपरिक्षेपपूर्वको बाहुभिरुरोविक्षेपः, अयोध्यासंक्षोभश्च ।

६७ अथापरेद्युः प्रातः सभायां मार्कण्डेयमौद्गल्यवामदेवादीनां राजर्त्विजां वसिष्ठसकाशे अराजकताप्रयुक्तदोषविस्तरवर्णनपूर्वकं भरतानयनप्रार्थनम् ।

६८ अथ वसिष्ठप्रहितानां दूतानां भरतानयनाय केकयनगरगमनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

योर्बहुशोचनम्, वसिष्ठसुमन्त्रादिभिस्तयोः समाश्वासनम्, तद्देशाचारभूतदहनदेशसेचनादिनियोजनं च ।

७८ अथ शत्रुघ्नेन मन्थराशिक्षणम्, कैकेय्या मन्थराश्वासनं च प्रकाशितवान् ।

७९ अथामात्यादिभिर्भरतं प्रति राज्यांगीकरणप्रार्थनम्, भरतेन तदनभ्युपगम्य स्वस्य रामनिवर्तनोद्योगकथनपूर्वकं मार्गशोधनाय तदौपयिकजनप्रेषणनियोजनं च ।

८० अथायोध्यामारभ्य आजाह्नवीतीरं मार्गसमीकरणवर्णनम् ।

८१ अथापरेद्युः प्रभाते राजप्रबोधनार्थमंगलवाद्यश्रवणसन्धुक्षितपितृमरणाग्रजविवासनस्मरणस्य भरतस्य शोकातिशयः, प्रातः सभामागतेन वसिष्ठेन सुमन्त्रद्वारा भरतशत्रुघ्नामात्यप्रधानाद्यशेषराजवल्लभाह्वानम्, तेषां सभाप्रवेशश्च ।

८२ अथ सभायां वसिष्ठेन राज्यांगीकरणमर्थितेन तावदसहनकृततन्निन्दनेन तीव्रतमस्वीयरामनिवर्तनाभिलाषकथनानन्दितनिखिलजनेन भरतेन वसिष्ठादिभिः कौसल्यादिभिरमात्यादिभिरखिलपौरवर्गैश्च सह रामसमीपगमनं प्रति प्रस्थानं कथितवान् ।

८३ अथ तीव्रतमरामदर्शनौत्कण्ठ्यमातृजनप्रमुखपरिवृतस्य भरतस्य ससैन्यस्य प्रस्थितस्य गंगातीरेऽवस्थानम् ।

८४ अथ तत्र भरतं प्रति गुहेनातिथ्याभ्यर्थनम् ।

८५ अथ भरतागमननिमित्तं भरतमुखेन ज्ञातवता गुहेनाग्रजमनुशोचतो भरतस्य समाश्वासनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

८६ अथ तत्र रामावस्थानसमये रात्रौ लक्ष्मणस्य सीतारामयोर्भूमिशयनादिकं प्रत्याप्रभातं शोचनम्, सूर्योदयानंतरं रामलक्ष्मणयोर्जटाकरणपूर्वकं भागीरथीमुत्तीर्य वने गमनं च गुहेन भरतायोक्तमित्याह।

८७ अथ तच्छ्रवणजनितशोकातिशयं भरतं प्रति गुहेन तत्र पूर्वं रामस्य जलमात्रकृताहारस्य सीतया सह दर्भास्तीर्णे इंगुदीवृक्षमूले शयनम्, तदानीं स्वस्य ज्ञातिजनपरिवृतस्य लक्ष्मणेन सह जागरणपूर्वकं रक्षणं च।

८८ अथ दर्भास्तीर्णे तत्र तत्र विकीर्णसीताभरणगलितकनकाबिन्दुकं सीतापरिवर्तनदशासक्ततत्कौशेयतन्तुकमिंगुदीमूलमुद्वीक्ष्य भरतस्याशोनुचनकथनम्।

८९ अथ ससैन्यस्य भरतस्य गंगातरणं भरद्वाजाश्रमप्रवेशश्च।

९० अथ भरतस्य भरद्वाजदर्शनमन्योन्यकुशलप्रश्नादिकप्रस्तावः।

९१ अथ भरतस्य ससैन्यस्य भरद्वाजेन कृतमातिथ्यम्।

९२ अथ भरतस्य चित्रकूटं प्रति प्रस्थानसमये भरद्वाजं प्रति कौसल्यादिव्यक्तिनिर्देशनम्, ततो भरद्वाजमनुज्ञाप्य चित्रकूटं प्रति प्रयाणम्, मध्ये यमुनातीरवनप्रवेशश्च।

९३ अथ भरतस्य चित्रकूटप्रान्तवनप्रवेशः, वसिष्ठं प्रति भरद्वाजोक्तस्थलचिह्नप्रत्यभिज्ञापनम्, शत्रुघ्नं प्रति वनवर्णनपूर्वकं रामाश्रमान्वेषणचोदनम्, ततः शत्रुघ्नप्रेषितैः पुरुषैः रामाश्रमधूमाचिह्नप्रदर्शनम्, भरताय तत्कथनम्, ततो भरतेन तत्रैव सेनास्थापनं च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

९४ अथ रामस्य चित्रकूटप्रवेशप्रभृतितद्दिनपर्यन्तवृत्तान्तस्य प्रतिदिनमेकरूपतया तदहर्वृत्तान्तकथनेन यावद्दिनवृत्तान्तोऽपि कथितः स्यादिति कृत्वा तस्मिन्नहनि रामेण प्रातरनुष्ठानानन्तरं सीतां प्रति चित्रकूटरामणीयकप्रदर्शनपूर्वकमनुकूलपत्नीभ्रातृलाभेन तादृशरमणीयस्थललाभेन चायोध्यातोऽधिकं निर्वृतिः कथिता ।

९५ अथ रामेण सीतायाः मन्दाकिन्याख्यनदीरामणीयकप्रदर्शनेनोपलालनम् ।

९६ अथ तत्र रामस्य सीतया साकं मांसाभ्यवहारसमये वन्यमृगयूथसंक्षोभदर्शनेन तत्कारणपरिज्ञानाय लक्ष्मणप्रेरणम्, तत उन्नतं सालमारुह्य कोविदारध्वजदर्शनेन ससैन्यतया रामस्य हननायागतं भरतं मन्वानेन लक्ष्मणेन रामप्रेम्णा भरतजिघांसापर्यन्तमतिशंकनम् ।

९७ अथ रामेण कुपितस्य लक्ष्मणस्य परिसान्त्वनम् ।

९८ अथ भरतस्य शत्रुघ्नगुहतज्ज्ञातिसहितस्य पादचारेण रामाश्रमान्वेषणम्, तच्चिह्नधूमदर्शनानन्तरं पुनस्तत्रागतजनस्थापनपूर्वकं गुहं शत्रुघ्नं चादाय गमनवर्णनम् ।

९९ अथ भरतस्य मातृजनानयनाय वसिष्ठं संदिश्याग्रे गच्छतः शत्रुघ्नं प्रति रामाश्रमचिह्नानि निर्दिशतो रामदुर्दशामनुशोचतः शत्रुघ्नसुमन्त्रसहितस्य रामसमागमः ।

१०० अथ रामेण कुशलप्रश्नव्याजेन भरतस्य भाविराज्यरक्षणौपयिकतया राजनीतिशिक्षणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

११८ अथ सीतयानुसूयोपदिष्टपातिव्रत्यधर्मप्रतिपादकवचनानुमोदनपूर्वकं तत्पृष्टस्वस्वयंवरकथनवर्णनम् ।

११९ अथ रामस्यात्र्याश्रमे रात्रिमुषित्वा प्रभाते नित्यकर्मानुष्ठानानन्तरमृषिगणदर्शितमार्गेण दण्डकारण्यं प्रति प्रस्थानकथनम् ।

एवमयोध्याकाण्डविषयानुक्रमणिका संपूर्णा ।

---

## अथारण्यकाण्डविषयानुक्रमणिका ३.

१ श्रीसीतालक्ष्मणसमेतस्य प्रविष्टदण्डकारण्यस्य श्रीरामस्य तत्रत्यऋष्याश्रममण्डलदर्शनम्, मुनिभिर्यथोचितं श्रीरामपूजनं च ।

२ अथ वनमध्ये विराधदर्शनम्, विराधेन सीताग्रहणपूर्वकं रघुनन्दनवेषनिन्दनपूर्वकं च तन्नामगोत्रादिप्रश्नः, स्वनामकथनम्, सीताभयदर्शनदुःखितेन रामेण लक्ष्मणं प्रति तदवस्थाप्रदर्शनम्, लक्ष्मणेन सधैर्यं विराधवधसौलभ्यप्रयुक्तिश्च ।

३ अथ पुनः पृच्छन्तं विराधं प्रति रामेण स्वनामकुलादिकीर्तनम्, ततो रामपृष्टेन विराधेन च स्वमातापितृकथनपूर्वकं स्वस्य ब्रह्मवरलब्धशस्त्रावध्यत्वकथनपूर्वकं च स्वबलगर्वप्रलेपनम्, ततो राममुक्तसप्तबाणताडितं सीतां भुवि त्यक्त्वा शूलमुद्यम्याभियान्तं विराधं प्रति बाणान् वर्षतोः रामल-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

क्ष्मणयोः स्वस्कन्धारोपणपूर्वकं विराधेन वनमध्यगमनम्, ताभ्यां गंतव्यमार्गानुकूलत्वात्तत्सहनं च ।

४ अथ स्नेहाद्रुदन्तीं सीतां दृष्ट्वा रामलक्ष्मणाभ्यां वेगेन विराधबाहुच्छेदनम्, तेन च रामपादस्पर्शजनितज्ञानेन स्वपूर्वजन्मवृत्तान्तादिकथनम्, शरभङ्गाश्रमोक्तिरूपवाचिककैङ्कर्यकरणम्, तस्य स्वर्गप्राप्तिश्च ।

५ अथ श्रीरामस्य सभार्यस्य सानुजस्य शरभङ्गाश्रमसमीपे शरभङ्गब्रह्मलोकानिनीषागतसरथसानुचरवासवदूरदर्शनपूर्वकं शरभङ्गाश्रमगमनम्, शरभङ्गेण पूजनम्, ततः शरभङ्गेण रामस्य सुतीक्ष्णाश्रममार्गोपदेशपूर्वकं रामसन्निधावग्निप्रवेशनेन परमव्योमप्राप्तिश्च ।

६ अथ शरभङ्गाश्रममुनिजनैः शरणागतिपूर्वकं रामाय राक्षसोपद्रवनिवेदनम्, रामेण तेषां राक्षसवधप्रतिज्ञानं च ।

७ अथ रामस्य सुतीक्ष्णाश्रमे तत्संदर्शनम्, ततः सुतीक्ष्णेन रामाय तत्रत्यमृगोपद्रवकथनम्, ततो रामेण मृगवधप्रतिज्ञापूर्वकं तस्मिन्नाश्रमे तद्रात्रौ निवासकल्पनं च ।

८ अथ सुतीक्ष्णानुज्ञया रामस्याश्रममण्डलदर्शनाय प्रस्थानम् ।

९ अथ मुनिजनसन्निधौ रामकृतां निखिलराक्षसवधप्रतिज्ञां श्रुत्वा धर्महानिभीतया सीतयातिप्रेम्णा रामं प्रति निर्वैरनिखिलराक्षसवधनिवर्तनाय साविनयं विज्ञापनम् ।

१० अथ रामेण सीतां प्रति आर्तरक्षणस्य क्षत्रियधर्मतया शरणागतविरोधिनां स्वविरोधितया स्वारा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

धनभूतयज्ञकर्मविघटनरूपमहापराधेन च प्रतिज्ञातनिखिलराक्षससंघवधस्यावश्यकर्तव्यत्वेन प्रत्युत्तरकथनम् ।

११ अथ वनमध्ये स्वसहानुयायिधर्मभृन्नामकमुनिसकाशान्माण्डकर्णिनिर्मितपञ्चाप्सरोनामकसरःप्रभावं श्रुतवता सर्वेष्वपि ऋषीणामाश्रमेषु कञ्चित्कालं निवासं कृतवता पुनः सुतीक्ष्णाश्रममागतवता रामेण सुतीक्ष्णं प्रत्यगस्त्याश्रमस्थानप्रश्नः, ततः सुतीक्ष्णेनागस्त्यभ्रात्राश्रममार्गेणागस्त्याश्रमगन्तव्यता, तन्मार्गचिह्नादिकथनम्, ततस्तेनैव मार्गेण गच्छता लक्ष्मणं प्रति वातापिल्वलविध्वंसनरूपागस्त्यकथां कथयतागस्त्यभ्रातुराश्रमे एकां रात्रिमुषित्वा प्रातः पुनर्लक्ष्मणं प्रति विन्ध्यस्तम्भनाद्यगस्त्यमहिमानं कथयतागस्त्याश्रममागत्य प्रथमतः स्वागमननिवेदनाय लक्ष्मणप्रेषणम् ।

१२ अथ शिष्यमुखाद्विदितरामागमनवृत्तान्तेन स्वनियुक्तशिष्यद्वारा आनीयमानस्य स्वाश्रमस्थब्रह्मादिदेवस्थानादीन् सकौतूहलं प्रेक्षमाणस्य श्रीरामस्य ससीतालक्ष्मणस्य सशिष्यगणं प्रत्युत्थितेन दत्तपाद्यासनादिकेन वैश्वदेवपूर्वकमातिथ्यं च कृतवतागस्त्येन वैष्णवधनुःशरतूणीरादीनां श्रीरामे समर्पणम् ।

१३ अथ खरादिवधायागस्त्येनानुज्ञातस्य ससीतस्य सलक्ष्मणस्य रामस्य पञ्चवटीं प्रति प्रयाणम् ।

१४ अथ रामस्य पञ्चवटीमार्गे स्ववंशक्रमकथनपूर्वकं पितृसखित्वं निवेदितवता जटायुषा सह समागमः, तेन सह पञ्चवटीगमनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri.

सर्गाः । विषयाः ।

१५ अथ पञ्चवट्यां गोदावरीतीरे लक्ष्मणनिर्मिताश्रमे रामेण सीतालक्ष्मणाभ्यां सह कंचित्कालं निवासः कृत इत्याह ।

१६ अथ तत्र कदाचित् प्रभातवेलायां गोदावरीं प्रति स्नानाय गमनसमये तदनुगच्छता लक्ष्मणेन रामं प्रति हेमन्तऋतुवर्णनपूर्वकं भरतगुणकथनपूर्वकं च कैकेयीनिन्दनम्, तदसहमानेन रामेण मातृनिन्दानिवारणपूर्वकं भरतगुणप्रशंसनम्, तद्दर्शनोत्कण्ठाकथनं च, ततो गोदावर्यां रामादीनां स्नानादिकृत्यं च।

१७ अथाश्रममागत्य तत्र सुखं वसतः श्रीरामस्य यादृच्छिकं शूर्पणखादर्शनम्, ततोऽन्योन्यकुलगोत्रज्ञानानन्तरं श्रीरामं प्रति शूर्पणखया भार्यात्वेन स्वाङ्गीकाराभ्यर्थनं च।

१८ अथ रामेण स्वस्य सदारत्वेन दूरस्थदारं लक्ष्मणं भजेतिपरिहासपूर्वकं लक्ष्मणं प्रति प्रेषितायाः लक्ष्मणेन च स्वस्य रामदासत्वेन दासभार्यात्वमनुचितामिति पुना रामं प्रत्येव प्रेषितायाः स्वापरिग्रहमूलमियमिति मत्या सीतां हन्तुमुद्युक्तायाः तावत् क्रुद्धरामाज्ञप्तलक्ष्मणनिकृत्तकर्णनासायाः शूर्पणखायाः खरसमीपगमनम् ।

१९ अथ शूर्पणखया विदितवृत्तान्तेन खरेण रामलक्ष्मणजयाय तत्सकाशं प्रति चतुर्दशराक्षसप्रवरप्रेषणम्, तेषां शूर्पणखया सह रामसमीपगमनं च।

२० अथ चतुर्दशानामपि राक्षसप्रधानानां रामेण वधः, ततोऽतिभीतायाः शूर्पणखायाः पुनः खरसमीपगमनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

२१ अथ शूर्पणखामुखात् खरस्य स्वप्रेषितचतुर्दशराक्षसवधश्रवणम् ।

२२ अथ खरस्य चतुर्दशसहस्रराक्षसतदनुगुणनानाविधायुधप्रभृतिपरिकरसहितस्य युद्धाय प्रयाणम् ।

२३ अथ खरस्य ससैन्यस्य प्रयातस्य दिव्यभौमशारीरमहोत्पातदर्शनेऽपि दर्पात्प्रयाणानिवृत्तिः ।

२४ अथ राक्षसपराजयहेतून् महोत्पातान् स्वविजयहेतुभूतानि सुनिमित्तानि च दृष्टवता रामेण पर्वतगुहायां सीतारक्षणाय लक्ष्मणप्रेषणम्, कवचादिधारणपूर्वकं युद्धाय सन्नद्धतयावस्थानम्, राक्षससेनायास्तत्समीपागमनं च ।

२५ अथ रामस्य राक्षसैः साकं तुमुलं युद्धम्, ततो रामप्रयुक्तगान्धर्वास्त्रेणानेकसाहस्रराक्षसचित्रवधश्च ।

२६ अथ रामेण खरत्रिशिरोव्यतिरिक्तानां दूषणप्रभृतिसेनाध्यक्षसहितानां चतुर्दशसहस्रसंख्यानां राक्षसप्रधानानां वधः ।

२७ अथ त्रिशिरसो वधः ।

२८ अथ रामेण खरस्य रथरथाश्वसारथिधनुःप्रभृतिसर्वपरिकरभञ्जनम् ।

२९ अथ शत्रुविषयेऽपि परमवात्सल्ययुक्ततया श्रीरामेण खरं प्रत्यानुकूल्याभिसंधिजिज्ञासया मृदुपूर्वं परुषोक्तिभिः पापकर्मदुःखोदर्कत्वादिबोधनम्, ततःखरस्यातिपापिष्ठतया मातृवधप्रवृत्तोन्मत्तन्यायेन तत्प्रतिक्षेपपूर्वकं रामोपरि गदाप्रक्षेपस्ततो रामेण गदाखण्डनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

३० अथ पूर्वं सर्वदेवसङ्घमर्दनचण्डगदागर्वेणानुकूल्याभावेऽपि इदानीं तद्ध्वंसनदर्शनेन वापि किमस्य विवेकेनानुकूल्यचिकीर्षा जातेति परीक्षिषया पुनरपि श्रीरामेण खरं प्रति न्याय्यवचननिदर्शनम्, ततः खरेण पित्तोपहतक्षीरन्यायेन तत्प्रातिक्षेपपूर्वकं सालवृक्षेण रामप्रहरणमुद्योगस्तावता तं शतशश्छिन्दतः शरसहस्रेण स्वसर्वांगमर्माणि कृन्ततो रामस्यातिसमीपे खरस्याभिपतनम्, शरसन्धानावकाशलाभाय तत्क्षण एव रामेण किंचित्पश्चाद्द्वित्रिपदक्षेपपूर्वकमतिशीघ्रसाहितेन अगस्त्यदत्तेन बाणवरेण खरहृदयभेदनम्, ततः खरवधपरितुष्टमहर्षिगणकृतरामस्तुतिः, देवैर्नभसः कुसुमवर्षाभिष्टवनादिकम्, ततो लक्ष्मणपूजितं श्रीरामं गिरिगुहातो लक्ष्मणसाहाय्येन निर्गत्य स्वभर्तृविक्रमानिरीक्षणनिर्भरविस्मयानन्दया जानक्या वीरव्रणश्रमजलरोमाञ्चशबलश्रीरामदिव्यमंगलविग्रहस्य गाढालिंगनं च ।

३१ अथाकम्पनमुखेन जनस्थानस्थापितखरदूषणत्रिशिरःप्रभृति निखिलराक्षसवधं श्रीरामकृतं श्रीरामस्यानन्यसाधारणं महिमानं तस्य युद्धेनासाध्यत्वं सीतापहारस्यैव तद्व्यसनहेतुत्वं च श्रुतवतो रावणस्य रथेन मारीचाश्रमगमनम्, तं प्रति सीतापहारे साहाय्यकरणप्रार्थनम्, ततो मारीचेन श्रीरामेण वैरकरणे तव सकलरक्षःकदम्बेन सह विनाशः सिद्धः, अतः किमर्थं लंकाराज्यसुखं स्वयमेव हातुमिच्छसीति प्रतिबोधनेन पुनर्लंकां प्रति निवर्तनं च ।

३२ अथ खरदूषणत्रिशिरःप्रभृतीन् राक्षसप्रधानान् चतुर्दशसहस्रसंख्याकान् घटिकात्रयेण तृणपूलावं लुवतः श्रीरामस्य विक्रमवैखरीं स्वचक्षुषा प्रत्यक्षितवत्यास्तत एव त्यक्तधृत्यास्त्वरितगत्याः शूर्प-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

णखायाः लंकायां पुष्पकविमानोपरि निखिलपरिजनपरिच्छदपरिवृतस्य निःसाधारणभुजबलवरबलदुर्ललितस्य दशग्रीवस्य स्ववैरूप्यकरणप्रदर्शनपूर्वकं दर्शनम् ।

३३ अथ शूर्पणखया जनस्थानस्थितयावद्राक्षसनिःशेषविनाशेऽपि तूष्णीमवस्थानेनातिक्रुद्धया रावणविनिन्दनम् ।

३४ अथ रावणेन रामस्य नामरूपायुधपराक्रमप्रकारान् पृष्टया शूर्पणखया श्रीरामलक्ष्मणयोर्यावत्स्वभावान् विशेषतोऽचिन्त्यं पराक्रमं च कथितवत्या सीतासौन्दर्यकथनपूर्वकं तज्जिघृक्षोत्पादनम् ।

३५ अथाचिरभाविमृत्युदृढीकृतसीतापहारनिश्चयेन रावणेन प्रच्छन्नतया कामगरथातीतमहार्णवेनातिरमणीयतमसिन्धुराजानूपदर्शनम्, तथा तत्रत्यस्य शतयोजनप्रमाणनानाशाखावृतस्य स्वकरगृहीतभक्ष्यार्थमहाप्रमाणगजकच्छपमहाबलसुपर्णारोहणमात्रभग्नैकशाखस्य तत्क्षणसावधानगृहीततच्छाखाकृतपापिष्ठतमानिषादग्रामानिर्मूलनशाखाधःप्रदेशनिवासिनानामुनिजनशाखापतनभयमोक्षणरूपदुष्टनिग्रहाशिष्टपरिपालनलाभप्रहर्षाद्विगुणिताचिन्त्यबलवैभवकृतदुष्प्रेक्षनानावरणरक्षणसुगुप्तमहेन्द्रभवनस्थाय्यमृतकलशाहरणसुपर्णापदानभूततच्छाखाभंगचिह्नस्य सुभद्रनाम्नो न्यग्रोधस्य दर्शनम्, ततः क्वचित्पुण्यतमे देशे आश्रमे मुनिवेषस्य मारीचस्य दर्शनम्, तेन रावणपूजनपूर्वकं शीघ्रागमननिमित्तप्रश्नश्च ।

३६ अथ रावणेन मारीचं प्रति जनस्थानवृत्तान्तकथनपूर्वकं स्वचिकीर्षितसीतापहारे विचित्रमृगरूपेण साहाय्याभ्यर्थनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

३७ अथ मारीचेनासकृदनुभूतरामपराक्रमेण रावणाहितैषिणा लोकातीताचिन्त्यवीर्यादिगुणशेवधिभूतस्य श्रीरामस्य प्राणदयितायाः स्वपातिव्रत्यमहिम्ना इच्छायां सत्यां सर्वमपि जगत् भस्मीकर्तुं शक्तायाः सीतायाः हरणं तव यावद्राक्षसजातीययुक्तस्य निर्मूलनामोघकारणम् , अतस्तच्चिन्तां मा कुर्विति रावणं प्रति हितोपदेशः ।

३८ अथ पुनर्मारीचेन पूर्वं स्वेन विश्वामित्रयागवेद्याक्रमणप्रयत्नसमये अतिबालेनाकृतास्त्रेण श्रीरामेण कृतं स्वनिपातनम्, स्वसहायभूतयावद्राक्षसहननं च निदर्श्य, रामविप्रियकरणे सर्वथा तव विनाशः सिद्ध इति रावणं प्रति बोधनम् ।

३९ अथ पुनर्मारीचः इदानीं रामस्य प्रौढतादशायां स्वयं मृगरूपस्य तादृशराक्षसद्वयसहितस्य तापसवेषं रामं परिबिभावयिषतः तावदेव राममुक्तशरेण राक्षसद्वयमरणं पश्यतः स्वस्य रामपराक्रमज्ञतया तत्क्षणमेव पलायनेन पलायितं रामशराप्रवृत्तेः कथंचिज्जीवनम् , तदाप्रभृति त्यक्तराक्षसव्यापारतया तपोनिष्ठया चावस्थानम् , स्वस्य रेफादिनामोच्चारणेऽपि महाभयं च प्रदर्श्य, रावणं न रामवैरे प्रवर्तस्वेत्यबोधयादिति ।

४० अथ मारीचवाक्यं श्रुतवता रावणेन परुषोक्तिभिर्मारीचोक्तप्रत्याख्यानपूर्वकं बलात्कारेण सीतापहारकार्यसाहाय्यनियोजनम् ।

४१ अथ भवितव्यतावशेन सीतापहारबद्धाग्रहस्य रावणस्य वचनं श्रुतवतापि मारीचेन पुनरपि मर्मै-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

कस्य मरणं प्रति न शोचामि किंतु तव सपुत्रमित्रबान्धवपरिवारस्य मरणं प्रत्येव, त्वं च भवितव्यतावशेन मद्वाक्यं नांगीकरोषि, आसन्नमरणजनाः हितं न गृह्णन्ति हीत्यादिरूपेण रावणं प्रति प्रतिवचनम् ।

४२ अथ स्वस्य रावणेन वधाद्रामेण वधं श्रेयस्करं मन्वानेन मारीचेन रावणवाक्यमंगीकृतवता रावणेन साकं रथेन नानानगरादिनिरीक्षणपूर्वकं दंडकारण्यस्थरामाश्रमप्रवेशः, तत्र रावणाभ्यर्थनेन क्षणेन विचित्रमृगरूपकरणपूर्वकं रामाश्रमसमीपे गतागतनिवर्तनमृगयूथानुसरणादिविचित्रचेष्टितकरणम् , तदैव तस्य तत्र कुसुमापचयार्थमागतया जानक्या अत्याश्चर्यभरिततया निरीक्षणं च ।

४३ अथ सीताहूतयो रामलक्ष्मणयोस्तादृशविचित्रमृगदर्शनम्, तदैव मारीचमायैवेयमिति लक्ष्मणेन कथनम्, ततः श्रीरामेण सीतोक्तरीत्या साक्षाच्चित्रमृगत्वेऽपि भवदुक्तरीत्या मारीचमायात्वेऽपि तादृशमृगत्वग्रहणार्थं राक्षसंहननार्थं च मया प्रवर्तनीयमेव त्वं तु सीतामाश्रमे स्थित्वा प्रतिक्षणं सर्वतः शंकितः सन्नप्रमत्तो रक्षेत्युवाच ।

४४ अथैवं लक्ष्मणं संदिश्य सशरचापासितूणीरं निर्गतेन मृगरूपमारीचनानाविधगतिभेददूराकृष्टेन ततः स्वबाणेन मारीचहननसमये स्वस्वरसदृशं मारीचकृतं हा सीते लक्ष्मणेत्येवंरूपं शब्दं च श्रुत्वा किं भविष्यतीति भीतेन रामेण स्वाश्रमाभिमुखतया आगमनम् ।

४५ अथ मारीचविसृष्टमार्तस्वरं रामाक्रन्दनं मन्वानया सीतया लक्ष्मणं प्रति रामसमीपगमनचोदनम्, तद्राक्षसमायाकृतमिति तूष्णीं स्थितं लक्ष्मणं प्रति तव रामस्य व्यसनमिष्टं यतस्त्वमीदृशसमयेऽपि तूष्णीं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

तिष्ठसि त्वं तु स्वयमेव वा भरतनियुक्तो वा रामव्यसनसमये मज्जिघृक्षयैव राममनुगतः कथमन्यथा भार्यादिकं विसृज्यैकाकिनो रामानुगमनम्, अहं तु रामं विना क्षणमपि स्थातुं प्राणान् धर्तुं च न शक्नोमि, रामादन्यं क्षुद्रं पुरुषं कदापि न स्पृशामि अतो भरतस्य तव च मनोरथो न सिध्यतीत्यादिपरुषभाषणम् पुनर्लक्ष्मणेन रामस्य निखिललोकवर्तिसमस्तसुरासुरमानुषगन्धर्वकिन्नरपिशाचपतगमृगप्रभृतिभिः संघीभूतैरपि न किंचिदपि कर्तुं शक्यं वृथा शंकां त्यज । अयं शब्दस्तु मृगरूपस्य मारीचस्यैवेत्यादि प्रतिवचनम्, ततो द्विगुणकोपया सीतया पूर्वोक्तरीत्या अतिपरुषभाषणम्, गोदावरीपतनविषपानभृगुपतनोद्बन्धनादिकरणवचनम्, ततस्तामाश्वास्य किंचित्प्रणम्य स्त्रीणां स्वभावं च विनिन्द्य कथमेकाकिनी वने मया विसर्जनीया किमहं करोमीति बहुशो विचिन्तयतो लक्ष्मणस्य रामसमीपगमनम् ।

४६ अथ रामलक्ष्मणापगमनं प्रतीक्षमाणेन तस्मिन् समये धृतपरिव्राजकवेषेण रावणेन रामाश्रमे सीतासमीपमागतेन सीतालावण्यदर्शनविवशहृदयेन सीतारूपप्रशंसादिपूर्वकं तन्नामभर्तृनामदेशादिप्रश्नः, तदा धर्मज्ञश्रेष्ठजनकवंशजननिसर्गसिद्धधर्मज्ञानया जानक्या तं ब्राह्मणपरिव्राजकं मन्वानया तस्य रावणस्यार्घ्यपाद्यादिभिः पूजनं च ।

४७ अथ सीतया परिव्राजकपृष्टस्य उत्तरानुक्तौ स शपेदिति मत्वा स्वकुलगोत्रभर्तृनामादिकथनम्, तत्कुलनामादिप्रश्नः, तदवसरलाभत्वरितेन रावणेन स्वकुलनामपौरुषादिप्रकटनपूर्वकं स्वांगीकरणप्रार्थनम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

तावता अतिकुपितया सीतया श्रीरामोत्कर्षरावणनिकर्षयोर्नानानिदर्शनप्रदर्शनपूर्वकं रावणं प्रति धिक्कारवचनजातं च ।

४८ अथ सीतावचनश्रवणकुपितेन रावणेन स्वकृतं स्वभ्रातृभूतकुबेरविजयपूर्वकं तदीयपुष्पकहरणम्, सूर्यचन्द्रेन्द्रप्रभृतिनिखिलदेवसंघविद्रावणकरणकिंचित्कोपव्यापारवत्त्वम्, स्वभयेन तरुपत्राणामप्यचलनं सरितामपि स्तिमितगमनम्, उष्णीकरणस्यापि सूर्यस्य शीतकिरणत्वमित्यादिकं समुद्रपरिघावृतदेवादिदुष्प्रेक्ष्यत्रिकूटशिखरस्थसुवर्णरत्नादिमयदिव्यलंकानगरनित्यनिवासानि: साधारणदिव्यभोगभागित्वमित्यादि चाभिधाय प्रयत्नसंपाद्यं मामप्रयत्नेनागतमवश्यमंगीकुरु अन्यथा तवातीव परितापो भवितेति कथनम्, तच्छ्रवणविवृद्धकोपया सीतया धर्मज्ञकुबेरानुबन्धिनस्तव पापिष्ठतमव्यापारप्रवृत्तिः कथं किं बहुना निखिलराक्षसजातिविनाशायैव तवायं व्यापारः तव पीतामृतस्यापि जीविताशा न कर्तव्येत्यादिरूपेण वचनेन रावणनिर्भर्त्सनम् ।

४९ अथातीव कुपितेन तत्क्षण एव त्यक्तपरिव्राजकवेषेण रावणेन नानाधिक्कारवचनपूर्वकं सीतां बलाद् गृहीत्वा रथमारोप्य गमनम्, तत्समये सीतायाः नानाविधाक्रन्दनादीनि जनस्थानस्थवृक्षगिरिनदीप्रभृतीनुद्दिश्य स्वहरणस्य रामं प्रति शंसनप्रार्थनम्, तत्र कस्मिंश्चिद्वृक्षे स्थितस्य जटायोर्दर्शनम्, तं प्रति महता दुःखेन आक्रन्दनपूर्वकं रामाय स्वहरणकथनप्रार्थनम् ।

५० अथ सीताशोकाक्रन्दनं श्रुतवतस्तावतैव प्रबुद्धस्य जटायोः प्रथमं रावणं प्रति धर्माधर्मश्रेयस्कर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

त्वदुःखकरत्वादिसामान्यनीतिप्रदर्शनपूर्वकमधर्म्यंसीतापहरणान्निवर्तनप्रयत्नस्तेनाप्यनिवृत्तं तं प्रति कटूक्तिभिस्तान्निवर्तनप्रयत्नस्तेनाप्यनिवृत्तं पलायमानं तं प्रति युद्धाय निरोधनं च ।

५१ अथ जटायुश्चिरं रावणेन सह कृतसंग्रामो रावणेन बहुभिर्बाणैरभिहतः पुना रावणस्य धनुःसारथिरथहयादीन् निर्मथ्य किंचित्परिश्रान्तः तावता अंकेन सीतामादाय पलायमानं रावणं पुनर्निरुध्य नानाविधपरुषोक्तिभिः संतर्ज्य तस्य शरीरे नखमुखादिभिः सर्वतः परिक्षतिं विधाय तस्य सीतापरिष्वंगपापिष्ठतमान् बाहून् दश च तुंडेनाच्छिद्य तावतातिकुपितेन भूतलत्यक्तसीतेन रावणेन खड्गेन निकृत्तपक्षः पपात । तं तादृशावस्थं स्वार्थत्यक्तप्राणं जटायुषं जानकी समीक्ष्य परिष्वज्य रुरोद च ।

५२ अथ युद्धसमये भूतलत्यक्तां जटायुं मृतमनुशोचन्तीं वृक्षान्दृढं बाहुभ्यामालिङ्ग्य रुदन्तीं जानकीं पुनर्बलाद्गृहीत्वा रावणगमनम् , तत्समयेऽतिवेगाकाशगमनेन सीताधृतकुसुमशरनानाविधनूपुरादिदिव्यभूषणादीनां भूमौ पतनम्, तादृशीं सीतादशां निरीक्ष्य वृक्षगिरिनदीप्रभृतीनां स्थावराणां सिंहव्याघ्रप्रभृतीनां तिरश्चां सीतासंवर्धितानां मृगपोतकानां चानुशोचनम्, सीतादशादर्शनेन वनदेवतानां गात्रकम्पनम्, सीताहरणसमयसंजातजगद्वैकृतं च ।

५३ अथ रावणेन ह्रियमाणया वाचामगोचरे शोकार्णवे मग्नया जानक्या अतिकरुणमतिपरुषं च रावणं प्रति निन्द्यवचनजालम् ।

५४ अथैवं रावणेन बलाद्ध्रियमाणया कस्यापि स्वनिवर्तनसमर्थस्यादर्शनेन प्रवृद्धभयशोकया सीतया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

गमनसमये कस्मिंश्चिद्गिरिशृंगे पञ्चवानरदर्शनम्, तत्र तत्क्षण एव दैवगत्या दृष्टाय रामाय मद्वृत्तान्तं साभिज्ञानामिमे वदेयुरिति प्रत्याशया भिन्नोत्तरीयकाण्डस्यान्तर्निक्षिप्तभूषणस्य तान् प्रति विसर्जनम्; सीतापहरणरूपमहासाहसकृत्यकरणजनितचित्तक्षोभेण रावणेन तत्कर्मावेदनम्, ततो रावणेन सीतां गृहीतवता निस्तीर्णसागरेण लङ्कायामन्तःपुरे सीतास्थापनम्, तत्र राक्षसीः प्रति अतिजागरूकतया सीतारक्षणालापनं च ।

५५ अथ रावणेन राघवशरानलभस्मीकृतनिखिलराक्षसगुल्मं जनस्थानं प्रति बलीयसां राक्षसानामष्टानां प्रेषणं ततोऽन्तःपुरं प्रविष्टेन स्वसंपत्प्रदर्शनेन सीतां वशीकर्तुमिच्छता तत एव बलात्सीतां गृहीतवता तस्यै स्वकीयानां नानारत्नखचितविचित्रप्रासादमण्डपगोपुरवापीकूपोद्यानप्रभृतिभोगस्थानानां प्रदर्शनम्, एतादृशसंपत्समृद्धं मां भजस्वेति प्रार्थनं च ।

५६ अथ रावणवाक्यश्रवणकुपितया अतिक्षुद्ररावणाभिमुखभाषणजुगुप्सया तृणं किंचिदन्तरतः कृतवत्या सीतया स्वश्वशुरकुलगारिम्णः स्वभर्तृगतसर्वमंगलगुणभूम्नः तत्र च वाङ्मनसागोचरस्य निखिलचराचरात्मकजगत्समूलनिर्मूलनपुनरुत्पादनादिलीलालेशस्य श्रीरामपराक्रमस्य च प्रदर्शनेन तत्प्रतिभटरावणगतदोषराशिप्रदर्शनेन च धिक्करणम्, निखिलराक्षसकुदम्बसहितस्य तव विनाशः सिद्ध इत्येवमादिशपनम्, ततः कुपितेन रावणेन द्वादशमासान्तरे त्वं यदि मद्वशगा न भविष्यसि तदा त्वां तु प्रातरशनार्थं सूदाश्छेत्स्यन्तीति प्रत्युक्त्वा राक्षसीः प्रति सीताया अशोकवनिकानयनपूर्वकं तत्र तर्जनभ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

र्त्सनादिभिः स्ववशीकरणाज्ञापनम्, तावता राक्षसीभिरशोकवनिकां नीतायाः सीतायास्तत्कृततर्जनभर्त्सनादिविवृद्धशोकायास्तत्र वासश्च ।

५७ अथ मृगरूपं मारीचं हत्वा प्रतिनिवृत्तेन क्रूरगोमायुस्वरादिदुर्निमित्तदूयमानमानसेन तत एव नानाविधचिन्तादन्तुरितान्तःकरणेन रामेण मध्येमार्गं विवर्णवदनस्य लक्ष्मणस्य दर्शनं तत्समागमः, कथं लक्ष्मण राक्षसभूयिष्ठे वने सीतामेकाकिनीं विसृज्यागतोऽसीत्यादिवचनम्, पुनःपुनर्दुर्निमित्तदर्शनेन सीताया हरणमरणाद्यन्यतमं सिद्धमिति निश्चितवतानुशोचनं च ।

५८ अथ लक्ष्मणं प्रति दुर्निमित्तादिभिः सर्वथा सीता नष्टेत्यनेकमुखमाक्रोशता असकृल्लक्ष्मणं पृच्छता अतिदूरधावनकृतश्रमपिपासादिपीडितेन रामेण स्वाश्रमसमीपप्रदेशं स्वाश्रमं क्रीडास्थानानि च शून्यानि दृष्ट्वा अननुभूतपूर्वव्यथाप्रथमावेशः ।

५९ अथ पूर्वसंगृहीतं विस्तरेण विवक्षुर्मध्येमार्गं समागतं लक्ष्मणं प्रति किमर्थं विजने राक्षससेविते वने सीतां विसृज्यागतोऽसीति रामेण प्रश्नः, ततो लक्ष्मणेन आर्तस्वरं श्रुतवत्या तावत् संजातमहाशोकया असकृत्प्रयासमाश्वासितयापि मामतीवोग्रैर्मदभिलाषेणैव त्वं राममनुगच्छसीत्यादिभिर्वचनैरधिक्षिप्तवत्या सीतयैव प्रेषितोऽहमागच्छामिति लक्ष्मणस्य प्रत्युक्तिः । ततो रामेण तथापि क्रुद्धायाः स्त्रिया वाक्यं श्रुत्वा मां निखिलराक्षससंहरणसमर्थं जानतापि भवता तां तादृशवने विसृज्य यदत्रागतं तदपनय एवेति पुनरुक्तिश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　विषयाः ।

६० अथ पुनःपुनर्दुर्निमित्तदूयमानमानसेन रामेण निजाश्रमसमीपादिविचयनपूर्वकं नानाविधवृक्षलतादीनचेतनानपि पदार्थानाहूयाहूय सीतागतिकथनाभ्यर्थनम्, ततस्तेषु निरुत्तरेषु मृगगजशार्दूलाद्यभ्यर्थनम्, तेष्वपि निरुत्तरेषु सर्वत्रादर्शनेनात्यन्तमवसादनम्, पुनःपुनर्मार्गणप्रयत्नश्च ।

६१ अथ पुनः पर्णशालादिकं सीतारहितं दृष्ट्वा उच्चैः स्वरेण सीताह्वानपूर्वकं रामस्य नानाविधप्रलापः, ततो लक्ष्मणेन समाश्वासनपूर्वकं पुनः सम्यक् सर्वतो मार्गणप्रयत्नकरणप्रार्थनम्, ततः सर्वतः काननस्य प्रस्रवणाख्यस्य पर्वतस्य सम्यग्विचयनम्, तत्र सर्वत्र सीतालाभाभावेनातीव रामस्य वैक्लव्यपूर्वकमुच्चैः प्रलापः पुनर्लक्ष्मणेन सान्त्वनम्, तदनादृत्य रामस्य पूर्ववत्प्रलापश्च ।

६२ अथ पुना रामेण कामपरवशेन सीतामपश्यतापि पुरतः पश्यतेव नानाविधपरिदेवनम्, सीताव्यसनेन स्वमरणमपि सिद्धं कृत्वा कैकेय्या मनोरथसिद्धिकथनम्, सीतया सहागतस्य स्वस्य तया विना नगरगमनाशक्यतां गमने जनकदर्शनाशक्यतां स्वस्य मरणेप्यधीरत्वापप्रथां प्रति चानुशोच्य त्वमिह मां विसृज्यायोध्यां गत्वा रामेणानुज्ञातस्त्वमयोध्यां पालयेति भरतं प्रति कथय, मदुक्त्या कैकेयीसुमित्राकौसल्या अभिवादय, सीतानिमित्तं मद्विनाशं विशेषेण मज्जनन्यै कौसल्यायै कथय इति लक्ष्मणं प्रति नियोजनम्, तत एतादृशीं रामदशां दृष्ट्वा लक्ष्मणस्य वाचामगोचरवैक्लव्यावाप्तिश्च ।

६३ अथ पुनर्लक्ष्मणशोकविवृद्धशोकेन रामेण राज्यप्रणाशपितृनाशजननीवियोगबन्धुवियोगवनवासा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

द्भिः सीताव्यसनाम्रेडितैश्चिन्त्यमानैरतीव शोकपारवश्यम्, तत्तादृशगुणवन्ति सीतावदनकण्ठबाहु-प्रभृतीन्यङ्गानि राक्षसैर्भक्षितानि भवेयुरिति परिदेवनम्, गोदावरीजलमध्यस्थविशालशिलातलदर्शनेन तत्रानुभूतपूर्वं सीतासरसलीलाविहारवचनादिकम्, लक्ष्मणसाक्षिकमिदानीमनुस्मृत्यातीव शोचनम्, गोदावरीगमनवनगमनपद्मिनीगमनादिकमाशङ्क्यातिभीरुतया, एकाकितया गमनासंभावनया पुनस्तद-भावनिश्चयः, पुनरादित्यवाय्वादीन् प्रति सीतागतिकथनायाभ्यर्थनम्, एवमियत्तारहितशोकार्णवपरि-प्लुतं श्रीराममवेक्ष्य स्वशोकमप्यनादृत्य लक्ष्मणेन रामाश्वासनम्, तदनादृत्य विमुक्तधैर्येण रामेण पुनर्महाव्यसनावाप्तिश्च ।

६४ अथ दीनेन रामेण लक्ष्मणं प्रति गोदावरीविचयनायाज्ञापनम्, ततो लक्ष्मणेन गोदावरी-तीरं सर्वं विचित्य क्वापि सीता न दृश्यत इति कथनम्, ततो रामेण स्वयमेव सीतागतिं ब्रूहीति गोदावरीप्रार्थनम्, तावतापि रावणभयेन गोदावर्याः तूष्णींभावेनावस्थानम्, अथ रामेणातीव जनका-दिनिरीक्षणाशक्यतादिकं प्रत्यनुशोचता आश्रमभुवि परिचितपूर्वान् मृगान् प्रति सीतागतिप्रश्नः, ततस्तैर्दक्षिणस्यां दिश्याकाशमुद्वीक्ष्य स्वयं च किंचित् गत्वा तदिङ्गितेन तद्दिशि सीता हृतेति सूच-नम्, तावदेवातिबुद्धिना लक्ष्मणेन दक्षिणां दिशं प्रति गमने सीताधिगमोपायो दृश्यते अत इमां दिशं गच्छावेत्यग्रजप्रार्थनम् , तथैवोभाभ्यां गमनम्, तत्र मार्गे सीताधृतानि पतितानि कुसुमानि दृष्ट्वानुशोचनम्, तत्र सन्निहितं प्रस्रवणाख्यं गिरिं प्रति सन्निहितां नदीं सीतागत्यकथनात्त्वां विध्वंसया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

मीति वचनम्, अथ तत्र महतो राक्षसपदविन्यासस्य तत इतो धावनं कृतवत्याः सीतायाः पदन्यासानां च दर्शनम्, ततः सर्वथा राक्षसैर्भक्षितेत्यनुशोचनम्, ततस्तत्र महद्धनुर्विशीर्णं तूणीरौ महान्तं रथं रथाश्वान् सारथिं च भग्नान् दृष्ट्वा सर्वथा सुन्दोपसुन्दवत् सीताविषये द्वयोर्विग्रहः समजनि । सर्वथा सीताभक्षितेति निश्चित्य महाशोकपरिणतेन महता कोपेन धर्मं धर्मफलप्रदान् देवान् स्वत्रदिमादिगुणांश्च प्रति जुगुप्सनम्, अथ विवृद्धकोपेन निखिलमपि ब्रह्माण्डं पिण्डीकरिष्यामीति जगन्निर्मूलनाय बाणसंधानं च ।

६५ अथ लक्ष्मणेन नैकस्यापराधेन सर्वलोकविध्वंसनं युक्तमित्यादिरूपेण संग्रहेण रामसमाधानम् ।

६६ अथ पुनर्लक्ष्मणः त्वं दशरथरचितानन्यसाध्यसुकृतफलरूपतया निखिललोकदुर्लभकल्याणगुणगणनिधिः समवतीर्णः तादृशगुणगणत्वविश्लेषदुःखेन राजा प्राणानपि जहौ अतस्तादृशस्य तव निरपराधनिखिलजगदुन्मूलनः कोपो न युक्तः। इह लोके ययातिनहुषनलमांधातृप्रभृतिभिर्महानुभावैरपि वसिष्ठादिभिर्दुर्दशासु किंकिं दुःखं नान्वभूयत अतस्तत्त्वबुद्ध्या सम्यग्विचार्य स्वापराधिसमुद्धरण एव प्रयतस्व त्वयैव बहुशो ममैवमुपदिष्टम् । समतीतगीष्पतिप्रभृतिकनिखिलविज्ञानधुरंधरस्य तव केन किमुपदेश्यम् अतस्त्वमेव वधानर्हं सात्त्विकं दिव्यं प्राणिजातं मानुषं च ब्राह्मणादिकम् आत्मनः सकलजगन्निर्मूलनक्षमं पराक्रमं चावलोक्यापराधिनमेवोद्धर्तुमर्हसीति प्रार्थयामास ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

६७ अथ लक्ष्मणवचनप्रतिष्ठापितधैर्येण रामेण तेन साकं किंचिद्दूरगमनम्, तत्र रुधिरार्द्रं गृध्रं शयानं दृष्ट्वा तस्यैव सीताभक्षकगृध्ररूपराक्षसविशेषत्वेन संशयः, तद्वधाय तत्समीपगमनम्, तावता गृध्रराजेन रावणकृतस्वमारणसीताहरणकथनम्, तच्छ्रवणेनानन्तदुःखावाप्तिः लक्ष्मणं प्रति परिदेवनं च ।

६८ अथातिशोकेन रामेण मुमूर्षुं गृध्रराजं प्रति सीतागतिकथनप्रश्नः ततस्तेन संग्रहेण रावणकृत-सीताहरणादिकथनम्, सीताहरणमुहूर्तबलेन पुनः सीतामवाप्स्यसीति कथयित्वा रावणस्थानादिकथनारंभ एव जटायोः प्राणोत्क्रमणम्, तादृशावस्थतद्दर्शनविवशहृदयेन रामेण बहुधा परिदेवनम्, ततस्तस्योत्तम-गतिप्रार्थनपूर्वकं संस्कारकरणम् उदकदानं च ।

६९ अथ रामलक्ष्मणौ पुनः प्रस्थितौ दण्डकारण्यं ततः क्रौञ्चारण्यं चातिक्रम्य मतंगाश्रम-पूर्वदिग्वनदर्शामयोमुखीनामकराक्षस्याः शूर्पणखाया इव कर्णनासादिच्छेदेन निरसनं कृतवन्तौ तादात्मिकदुर्निमित्तानि चिन्तयन्तौ अतिबीभत्सभीममहाकलेवरस्य योजनायतबाहुकस्य कबन्धस्य बाहुपाशबद्धावन्वशोचताम् ।

७० अथ देशकालोचितज्ञेन लक्ष्मणेन रामं प्रति कबन्धबाहुद्वयच्छेदनाभ्यर्थनम्, तच्छ्रवणकुपितेन कबन्धेन रामलक्ष्मणभक्षणप्रयत्नः, तावद्वाभ्यां रामलक्ष्मणासिभ्यां कबन्धदक्षिणसव्यबाहुच्छेदनम्, तावत्स्मृतपूर्व-जन्मवृत्तान्तेन कबन्धेन कौ युवामिति प्रश्नः, लक्ष्मणेन स्वस्वरूपवृत्तान्तादिकथनम्, तावतातिसंतुष्टेन कबन्धेन अतिसंमोदनपूर्वकं स्वस्य विरूपशरीरप्राप्तिहेतुकथाकथनारम्भश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

७१ अथ कबन्धेन पुरा स्वस्य स्वतः सोमसूर्यशक्रादीनामिव दिव्यरूपवत्त्वं तादृशस्यापि स्वस्य भयंकरराक्षसरूपपरिग्रहेण ऋषिसंघवित्रासनम्, ततः कदाचित्तथैव स्थूलशिरोनामकमुनिधर्षणम्, ततः क्रुद्धेन तेनर्षिणा राक्षसरूपमेव तवास्त्विति शापः, ततो याचितेन तेन यदा रामस्त्वद्भुजौ छित्त्वा त्वां दहेत्तदा तव स्वीयरूपप्राप्तिरिति शापमोक्षकथनम्, अथ पुनः स्वस्य तादृग्रूपस्यैव स्वकुलद्वेषीन्द्रजयाय पितामहमुद्दिश्य तपःकरणम्, तेन च स्वस्य दीर्घायुःप्रदानम् , तद्गर्वेण स्वस्य शक्रप्रघर्षणम् तावत् क्रुद्धेन वासवेन वज्रेण भग्नशिरःसक्थितया करणम्, तदा स्वयाचितेन तेन स्वस्यामारणम्, भग्नशिरःसक्थितया आहारसंपादनाय योजनायतबाहुद्वयदानम्, कुक्षावास्यकल्पनम् , तदाप्रभृति स्वस्य तादृशबाहुद्वयेन स्वपुरस्थयावज्जन्तुग्रहणभक्षणम्, शक्रेणापि यदा राम एतौ भुजौ छिन्द्यात्तदा तव स्वर्गप्राप्तिरिति कथनात् स्वस्य सदा रामागमप्रतीक्षणम्, इदानीं भुजद्वयनिकृन्तनेन युवां रामलक्ष्मणावेव एवं महोपकारकयोर्भवतोरहं बुद्धिसाचिव्यं करिष्यामीति कथनम्, तावद्रामेण रावणनिलयादिकथनप्रश्नः, पुनः कबन्धेन नाहं रावणं जाने अपि तु अदग्धस्य मम दिव्यज्ञानाभावात् भवद्भ्यामस्य देहस्य दाहे कृते पश्चादुत्पन्नदिव्यज्ञानः सन् भवतो जानकीलाभहेतुभूतं सन्मित्रं कथयामीति कथनं च।

७२ अथ संस्कृतः कबन्धः स्वरूपं प्रत्यापन्नः वालिनिरस्तमृष्यमूकगिरिस्थितं सूर्यपुत्रं सुग्रीवं सखायं कुरु सीतां स विचित्य दास्यतीत्यब्रवीत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

७३ अथ कबन्धेन सुग्रीवस्थानमार्गं दर्शयित्वा गमनम् ।

७४ अथ कबन्धदर्शितमार्गेण रामलक्ष्मणयोः पम्पातीरस्थशबर्याश्रमगमनम्, तत्र शबर्या पूजनम्, रामाय शबर्या स्वाचार्यभूतमतंगशिष्याश्रमदेवपूजास्थानादिप्रदर्शनम्, ततो रामानुज्ञातया तया आत्मसमाधिबलेन स्वगुरुस्थानभूतपरमपदगमनं च ।

७५ अथ लक्ष्मणेन शबर्याश्रमतदाचार्यमाहिमवृत्तान्तं कथयता सीतामार्गणत्वराविवृद्धसुग्रीवदिदृक्षायुक्तेन श्रीरामेण नानाविधवृक्षगुल्मलतादियुक्तपम्पामार्गवनदर्शनपूर्वकं मार्गमध्यस्थमतंगसरसि स्नानपूर्वकं पुनः पम्पातीरसमीपवनदर्शनपूर्वकं च पम्पाप्रवेशः ।

एवमारण्यकाण्डविषयानुक्रमणिका समाप्ता ।

## अथ किष्किन्धाकाण्डविषयानुक्रमणिका ४.

१ अथ रामस्य सलक्ष्मणस्यातिरमणीयपम्पासरोदर्शनम्, तत्तादृशरमणीयपुष्करणीदर्शनोद्दीपितसीताविरहानलस्य तस्य चित्तक्षोभपूर्वकं लक्ष्मणं प्रति नानाविधवृक्षलतागुल्मरमणीयपुष्पादिवर्णनम्, नानाविधहंससारसक्रौञ्चमद्गुमयूरदात्यूहप्रभृतिपक्षिणां मिथुनीभूय चरतां दर्शनेन स्वस्य कामोद्दीपनकथनम्, एतादृशवसन्तऋतुसमये अतिमनोहरमलयमारुतसंचारे कथं सीतां विना मम जीवितधारणमित्यादिरीत्या अतीवावसादनम्, ततो लक्ष्मणेन भवादृशानामेव मतिरेवं चेत्कथमितरे वर्तेरन् प्रियजने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

अतिस्नेहः महोपद्रवाय भवेत् अतो धैर्यमवलम्ब्य सीताधिगमसाधनप्रयत्नं कुर्वित्याश्वासनम्, तावता रामस्य सधैर्यस्य लक्ष्मणेन साकं पम्पामतीत्य ऋष्यमूकसमीपगमनम्, तौ द्वौ विलक्षणरूपलावण्यौ महौजसौ सर्वभयंकरशरचापासिधरौ दृष्ट्वा सुग्रीवस्य ससचिवस्य वालिप्रेरितबुद्ध्यातीव त्रासश्च।

२ अथ रामलक्ष्मणौ दृष्ट्वा त्रस्तस्य सुग्रीवस्य तयोः स्वरूपपरिज्ञानार्थं तत्समीपं प्रति हनुमत्प्रेषणम्।

३ अथ सुग्रीवप्रेषितस्य हनुमतो भिक्षुरूपस्य रामसमीपगतस्य रामलक्ष्मणरूपलावण्यतेजःपराक्रमायुधादिप्रशंसाव्याजेन तयोः कुलगोत्रनामादिप्रश्नः, तावत्तद्वाक्यनैर्दोष्यगुणपौष्कल्यपरवशहृदयेन श्रीरामेण स्वयं लक्ष्मणं प्रति तद्वाक्यश्लाघापूर्वकं तत्प्रतिवचनकथनाय लक्ष्मणनियोजनम्, ततोऽतिचतुरेण रामानुजेन संग्रहेण सुग्रीवदर्शनार्थमेवावयोरागमनमिति प्रत्युक्तिश्च।

४ अथातिनिपुणं सौमित्रिवचनं श्रुतवता तत्क्षण एव सुग्रीवस्य राज्यागमनं सिद्धं मन्वानेन हनुमता सामान्यतः कार्यार्थित्वे दर्शितेऽपि पुनः कुलनामराज्यभ्रंशनिमित्तादिप्रश्नः, तदा नियुक्तेन लक्ष्मणेन पितुर्दशरथस्य तस्य ज्येष्ठपुत्रस्य स्वाग्रजस्य रामस्य तद्दास्यैकानिरतस्य स्वस्य च यथोचितं गुणनामादिकथनपूर्वकं श्रीरामस्य राज्यभ्रंशं स्वेन सीतया च सह वने वासं रक्षसा केनापि तस्या हरणम्, तन्नामाद्यपरिज्ञानम्, एतादृशस्य रामस्य विषये सुग्रीवेणैव साहाय्यं कर्तव्यमिति तच्छरणवरणप्रयत्नं चोक्त्वा वचःसमापनम्, ततो हनुमता सुग्रीवो युवयोः साहाय्यं करिष्यतीति प्रतिकथनम्, ततो लक्ष्मणेन श्रीरामं प्रति सुग्रीवसमीपगमनप्रार्थनम्, ततो हनुमता रामलक्ष्मणाभ्यां साकं सुग्रीवसमीपगमनं च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　　　विषयाः ।

५ अथ हनुमता ऋष्यमूके राघवौ प्रतिष्ठाप्य समीपस्थमलयगिरिं गतवतः सुग्रीवस्य समीपं गत्वा रामवृत्तान्तमावेद्य तेन साकमृष्यमूकागमनम्, ततो रामस्य सुग्रीवेण अग्निप्रदक्षिणपूर्वकं सख्यकरणम्, अथ सुग्रीवेण वालिसकाशादभयप्रार्थनम्, रामेण वालिवधप्रतिज्ञानं च ।

६ अथ सुग्रीवेण श्रीरामं प्रति सीतामानीय दास्यामीति प्रतिज्ञानम्, ततः सीतात्यक्ताभरणप्रदर्शनम्, ततः श्रीरामेण तद्दर्शनकृतपरिदेवनम्, ततस्तेन रावणवासस्थानादिप्रश्नश्च ।

७ अथ सुग्रीवेण स्वस्य रावणस्थानापरिज्ञानेऽपि रावणं हत्वा सीतामानीय दास्यामीति प्रतिज्ञानम्, ततो रामेण सीतान्वेषणकरणनियोजनम्, ततः पुनर्वालिवधशपथेन सुग्रीवस्य सन्तोषणं च ।

८ अथ सुग्रीवेण देहादित्यागं कृत्वा भित्रकार्यं कर्तव्यमिति कथनम्, ततः श्रीरामेण पुनः शपथपूर्वकं वालिवधप्रतिज्ञानम्, ततः सुग्रीवेण स्वीययौवराज्यदारहरणादिकथनम्, ततः श्रीरामेण सुग्रीवस्य वालिना साकं वैरकारणप्रश्नः, ततः सुग्रीवेण वैरकारणकथनारम्भश्च ।

९ अथ सुग्रीवेण पुरा स्वपितृमरणानन्तरं ज्येष्ठतया वालिने मन्त्रिभी राज्येऽभिषेचनम्, ततः कदाचिन्मायाविनाम्नोऽसुरस्य रणाय वाल्याह्वानम्, ततः स्वेन साकं वालिनिर्गमनम्, वालिभीतस्य मायाविनः बिलप्रवेशनम्, ततो वालिना बिलद्वारे स्वनिक्षेपपूर्वकबिलान्तःप्रवेशनम्, ततो महतो रक्तप्रवाहस्य दर्शनेनासुरनिर्घोषश्रवणेन च वालिनं मृतं मत्वा बिलद्वारं गण्डशैलेनाच्छाद्य स्वस्य नगरागमनम्, ततो मन्त्रिभिः स्वस्य राज्याभिषेचनम्, असुरं निहत्य नगरं प्रत्यागतस्य वालिनो नम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

स्कारादिपूर्वकमज्ञानकृतमिदमिति च सान्त्वनेऽपि प्रसादाकरणं कथितं च।

१० अथ पुनः सुग्रीवेण कुपितस्य वालिनः बहुशः सान्त्वनेऽपि प्रसादाकरणम्, प्रकृतीरानीय मायावियुद्धे राज्यकांक्षया बिले मां रुरोधेत्युक्त्वा मां निर्यासितवानिति कथनपूर्वकमभयप्रार्थनम्, ततो रामेण तथैव करिष्यामीति प्रतिज्ञानम्, तच्छ्रवणेन सुग्रीवसन्तोषश्च।

११ अथ पुनः सुग्रीवेण वालिविक्रमप्रकारोपक्षेपः, ततः कदाचिद्वालिदुन्दुभ्योर्युद्धम्, वालिना तं निहत्य स्रवद्रुधिरप्रवाहस्य तदीयदेहस्य दूरप्रक्षेपणम्, ततस्तद्रुधिराबिन्दुभिर्मतङ्गाश्रमदूषणम्, क्रुद्धेन मतङ्गेन वालिनः स्वाश्रमप्रवेशे वधोऽस्त्विति शापप्रदानम्, तदपि वानराणां च तत्प्रवेशे शैलीभवनशापः, तत्रत्यानां सप्तसालानां पूर्वं वालिना बलेन रन्ध्रीकरणप्रदर्शनम्, ततो दुन्दुभिकलेवरस्य एकेन पादेन धनुःशतद्वयदूरंप्रक्षेपप्रार्थनम्, रामेण पादांगुष्ठेन दुन्दुभिकायस्य शतयोजनपर्यन्तं प्रक्षेपणम्, तावता अतृप्तेन सुग्रीवेण सालभेदनाद्यर्थनम्।

१२ अथ श्रीरामेणैकबाणेन सप्तसालगिरिरसातलानां भेदनम्, ततः सुग्रीवेण वालिवधाय रामेण साकं किष्किन्धासमीपगमनम्, तदुपकण्ठे रामादीनां वृक्षैरात्मगोपनपूर्वकमवस्थानम्, ततो वालिनः सुग्रीवेण द्वन्द्वयुद्धम्, वालिसुग्रीवयोराकृत्यादिभिरत्यन्तसादृश्येन भेदाज्ञानाद्रामेण तूष्णीमवस्थानम्, तावता सुग्रीवस्य ऋष्यमूकं प्रति पलायनम्, ततो वालिसुग्रीवभेदप्रदर्शनार्थं सुग्रीवकण्ठे लक्ष्मणेन गजपुष्पलताबन्धनम्, ततः पुनः किष्किन्धां प्रति रामादिभिः सह सुग्रीवस्य प्रयाणोपक्रमश्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गः । विषयाः ।

१३ अथ किष्किन्धां प्रति रामादिभिः सह सुग्रीवस्य गमनम्, ततः सुग्रीवेण रामं प्रति सप्तजनानामाश्रममाहात्म्यकथनं च ।

१४ अथ किष्किन्धोपकण्ठे रामादीनां वृक्षैरात्मगोपनपूर्वकमवस्थानम्, सुग्रीवेण किष्किन्धाद्वारमावृत्य गर्जनं च ।

१५ अथ युद्धाय वालिनिर्गमनम्, तत्र तारया सुग्रीवसहायभूतेन श्रीरामेण साकं विरोधस्तवायुक्तः अतः सुग्रीवस्य यौवराज्यदानपूर्वकमुपलालनं कुर्वित्यादि हितवचनम्, तारावचनस्य वालिना अनङ्गीकरणं च ।

१६ अथ ताराश्वासनपूर्वकं निर्गतस्य वालिनः सुग्रीवेण साकं द्वन्द्वयुद्धकरणम्, सुग्रीवबलहानिसमय एव रामेण बाणेन वालिवक्षसि ताडनम्, तत्क्षण एव वालिनो भुवि पतनं च ।

१७ अथ भुवि पतितस्य मुमूर्षोर्वालिनः रामं प्रति बहुशो निंदावचनम्, ततो बहुभाषणक्लेशशुष्कमुखेन वालिना तूष्णींभवनं च ।

१८ अथ श्रीरामेण भूमौ निपतितं वालिनं प्रति धर्मशास्त्रनिरूपणपूर्वकं समाधानवचनम्, तच्छ्रवणसंजातज्ञानेन वालिना स्वापराधक्षमापनपूर्वकम् अङ्गदे सुग्रीव इव सप्रेमवर्तनप्रार्थनम्, तदङ्गीकृत्य रामेण वालिनं प्रति दैवगतेर्दुर्निवारताप्रदर्शनेन पुनः सान्त्वनं च ।

१९ अथ रामबाणेन निहतं वालिनं श्रुतवत्यास्तारायाः अङ्गदेन साकं वालिसमीपगमनम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

२६ अथ श्रीरामेण वर्षर्तुतया सीतान्वेषणासमयताप्रदर्शनपूर्वकं सुग्रीवस्य राज्याभिषेकनियोजनम्, अङ्गदस्य यौवराज्याभिषेकनियोजनम्, तथैव तयोरभिषेचनं च ।

२७ अथ श्रीरामेण सलक्ष्मणेन किष्किन्धासमीपवर्तिनः प्रस्रवणनाम्नः पर्वतस्य कस्यांचिद्गुहायामाषाढादिमासचतुष्टयसमापनम्, ततो रामेणातिरमणीयपर्वततटाकप्रभृत्युद्दीपकवस्तुदर्शनस्मारितसीताविरहतया बहुशः शोचनम्, तदा सौमित्रिणा समाश्वासनम् ।

२८ अथ रामेण लक्ष्मणं प्रति विस्तरेण वर्षर्तुवर्णनपूर्वकं स्वस्य राज्याच्च्यवनं दारनाशं प्रबलशत्रुकत्वं च विचिन्त्यानुशोचनम्, पुनश्च लक्ष्मणेन समाधानम् ।

२९ अथ हनुमान् वर्षाकालेऽतीते मित्रकार्यं विस्मृतवन्तं सुग्रीवं सम्यक्प्रतिबोध्य तन्मुखेन नीलस्य पञ्चदशरात्राभ्यन्तर एव सकलसेनासमानयनमज्ञापयत् ।

३० अथ शरदि प्राप्तायामपि सीतान्वेषणप्रयत्नाभावमसहमानेन रामेणानुशोचनम्, ततो लक्ष्मणेनाश्वासनम्, ततः पुना रामेण शरद्गुणवर्णनपूर्वकं सङ्केतितमासचतुष्टयमतिक्रम्यापि निरुद्यमं सुग्रीवं प्रति वक्तव्यतया लक्ष्मणं प्रति कथनम्, तच्छ्रुत्वा सुग्रीवं प्रति लक्ष्मणस्य निग्रहसङ्कल्पश्च ।

३१ अथ लक्ष्मणेन सुग्रीवहननार्थं गमनोद्योगः, तावता श्रीरामेण स्वोक्तभीषकवचनमात्रकथनाय सुग्रीवं प्रति लक्ष्मणस्य प्रेषणम्, ततः किष्किन्धासमीपमागतं प्रवृद्धकोपं लक्ष्मणं प्रेक्ष्य सर्वैर्वानरैरङ्गदेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

च सुग्रीवसमीपे लक्ष्मणागमनकथनम्, ततस्त्वतिप्रमत्तसुग्रीवप्रबोधने अङ्गदेन प्लक्षप्रभावाख्यमन्त्रिभ्यां सह सुग्रीवसमीपमागत्य मन्त्रिमुखेन लक्ष्मणागमनादिवृत्तान्तज्ञापनं च।

३२ अथ लक्ष्मणस्य द्वार्यवस्थानं श्रुतवतः सुग्रीवस्य रामकोपं प्रति कारणविचिन्तनाय मन्त्रिनियोजनम्, तावद्धनुमता स्वसङ्केतितकालातिक्रम एव कोपनिमित्तं स्वबोधनार्थमेव लक्ष्मणागमनम्, अतोऽञ्जलिं बद्ध्वा लक्ष्मणं प्रसादयित्वा स्वप्रतिज्ञातार्थं निर्वर्तयेति सुग्रीवं प्रति हितोपदेशश्च।

३३ अथ लक्ष्मणस्य किष्किन्धानगररामणीयकदर्शनपूर्वकं सुग्रीवान्तःपुरप्रवेशः, तत्र रमणीजननूपुरारावश्रवणजनितकोपेन लक्ष्मणेन ज्यास्वनकरणम्, तावज्ज्यारवश्रवणपरिचकितेन सुग्रीवेण लक्ष्मणकोपशमनाय प्रथमतस्ताराप्रेषणम्, तया लक्ष्मणसमीपमागतया लक्ष्मणसान्त्वनपूर्वकं तस्यान्तर्नयनेन लक्ष्मणस्य सुग्रीवसमीपगमनं च।

३४ अथ लक्ष्मणदर्शनेन व्यथितेन्द्रियस्य सुग्रीवस्य स्त्रीजनेन सहासनादुत्थायावस्थानम्, तावदेव लक्ष्मणेन सङ्केतितकालातिक्रमदोषप्रयुक्तस्य रामवाक्यस्य कथनं च।

३५ अथ कुपितं लक्ष्मणं प्रति तारासान्त्वनम्।

३६ अथ तारावाक्येन प्रशान्तकोपं लक्ष्मणं प्रति सुग्रीवेण श्रीरामगुणप्रशंसनम्, तच्छ्रवणसन्तुष्टेन लक्ष्मणेन च सुग्रीवप्रशंसापूर्वकं स्वोक्तपरुषवचनस्य क्षमापनं च।

३७ अथ सुग्रीवेण पूर्वं हनुमन्तं प्रति वानरानयनार्थं दशाहान्यवधीकृत्य पुनर्दूतप्रेषणाज्ञापनम्, तत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

स्तथैव हनुमता दूतप्रेषणम्, तैर्वानरनिकेतनेषु गत्वा तेषां त्वरणकरणम्, ततस्तत्तत्स्थानेभ्यः सर्ववानराणां च निर्गमनम्, पूर्वं नीलमुखेन प्रेरितानां दूतानां माहेश्वरयज्ञायतनस्थमासपर्यन्ततृप्तिकरफलादीनामाहरणम्, तत्समर्पणपूर्वकं सर्ववानरागमनवृत्तान्तकथनं च ।

३८ अथ दूतानां बहुमानपूर्वकं विसर्जनम्, ततः सुग्रीवस्य लक्ष्मणेन सह शिबिकारोहणपूर्वकं श्रीरामसमीपगमनम्, ततः सुग्रीवं प्रति श्रीरामेण अमित्रनिरसनमित्रसंग्रहणादिरूपराजधर्मशिक्षणपूर्वकं सीताधिगमोपायचिन्तनाज्ञापनम्, तावत्सुग्रीवेण अनेकसेनापरिवृतवानरयूथपागमनज्ञापनपूर्वकं तदुद्योगप्रदर्शनेन श्रीराममनस्तोषणं च ।

३९ अथ रामेण सुग्रीवश्लाघनम्, ततोऽसङ्ख्येयर्क्षवानरगोलाङ्गूलनिकुरम्बैकार्णवीभवनम्, तत आगतवानरयूथपानां सुग्रीवेण रामसन्निधौ तत्तत्स्वरूपकथनपूर्वकं यथोचितवासस्थानाज्ञापनं च ।

४० अथ सुग्रीवेण श्रीरामसन्निधौ आगतवानराणां कार्यनियोजनप्रार्थनम्, ततो रामेण रावणवासस्थानस्य सीताजीवनस्य च ज्ञेयत्वाय सर्वास्वपि दिक्षु वानरा मार्गणाय प्रेषयितव्या इति सुग्रीवनियोजनम्, ततः सुग्रीवेण रामलक्ष्मणसन्निधौ विनतं नाम यूथपं प्रति प्राचीं दिशं गत्वा सीतारावणनिलयं चाधिगम्यागच्छेति नियोजनं च ।

४१ अथ सुग्रीवेण हनुमन्नीलजाम्बवत्सुहोत्रक्षरारिशरगुल्मगजगवाक्षगवयसुषेणर्षभमैन्दद्विविदवि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

जयगन्धमादनोल्कामुखासङ्गाख्यान् वानरयूथपतीनङ्गदसहितानवेक्ष्य सीता यथा लभ्येत तथा प्रयत्नं कुरुतेति दक्षिणां दिशं प्रति प्रेषणम्, तत्प्रेषणप्रकारश्च ।

४२ अथ पुनः सुग्रीवेण मरीचिपुत्रं ताराया: पितरं स्वश्वशुरं सुषेणं च प्रति पश्चिमदिशं गत्वा सीतां रावणनिलयं च विचित्य निवर्तध्वमिति नियोजनम् ।

४३ अथ पुनः सुग्रीवेण शतबलिनामानं यूथपतिं प्रति उत्तरां दिशं गत्वा तत्र रामपत्नीं रावणनिलयं च विचिनुतेति प्रेषणप्रकारः ।

४४ अथ पुनः सुग्रीवेण सीताधिगमो हनुमतैवेति निश्चित्य हनुमति विशेषतः स्तुतिपुरःसरं सीताधिगमरूपकार्यभारनिक्षेपपरवचनम्, ततः श्रीरामेण स्वनामाङ्किताङ्गुलीयकप्रदानपूर्वकं त्वयैवैतत्कार्यं साधनीयमिति कार्यभारनिक्षेपश्च ।

४५ अथ पुनः स्वकृताज्ञाकरणदार्ढ्याय सुग्रीवेण सर्वान्वानरान् प्रत्यपि सामान्यतः मया यथोक्तं तथा सर्वैर्विचेतव्यमिति पुनराज्ञाकरणम्, ततो वानराणां प्रयाणसन्नाहं दृष्ट्वा सुग्रीवस्यातिसंतुष्टहृदयतयावस्थानम्, ततः सर्वैरपि प्रयाणसमये नानाविधवीरवादकरणं च ।

४६ अथ सर्ववानरगमनानन्तरं श्रीरामेण सुग्रीवं प्रति निखिलभूमण्डलवृत्तान्तो भवता कथं विदित इति प्रश्नकरणम्, ततः सुग्रीवेण पूर्वं मायावियुद्धे अज्ञानकृतापराधेन कुपितवाल्यभिद्रुतमत्पलायनसमये मया सर्वमपि भूमण्डलं दृष्टमिति प्रत्युत्तरकथनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

४७ अथ विनतशतबलिसुषेणैः पूर्वोत्तरपश्चिमदिक्प्रेषितैः स्वस्वदिग्विचयनपूर्वकं मासान्ते समागत्य सीता न दृष्टा हनुमानेव तां द्रक्ष्यतीति सुग्रीवं प्रति कथनम् ।

४८ अथ दक्षिणादिशि प्रेषितेन ताराङ्गदादिसहितेन हनुमता विन्ध्योपान्तशून्यारण्यविचयनपूर्वकं मरुभूमिविचयनम्, तत्र गिरिगह्वरे कंचनासुरं दृष्ट्वा रावणभ्रान्त्याङ्गदेन हननम्, ततस्तदा वासभूमि-विचयनपूर्वकं परिश्रमादेकत्र वृक्षमूलेऽवस्थानं च ।

४९ अथ वानरान्प्रत्यङ्गदेन मासातिक्रमसुग्रीवोग्रदण्डत्वादीन्प्रदर्श्य पुनः सम्यग्विचनायाज्ञापनम्, ततो गन्धमादनेनापि तान्प्रति हितवचनकथनम्, ततो रजतपर्वतादीन् विचित्य मुहूर्तं विश्रम्य पुनरित-स्ततो विचेतुं प्रवृत्तिश्च ।

५० अथ ऋक्षबिले वानराणां स्वयंप्रभादर्शनम् ।

५१ अथ स्वयंप्रभया वानरान्प्रति ऋक्षबिलवृत्तान्तकथनम् ।

५२ अथ हनुमताभिगमनहेतुकथनम् ।

५३ अथ बिलादुत्तीर्णानां वानराणां निर्वेदः ।

५४ अथ वानराणामङ्गदस्य च प्रायोपवेशालोचनमालोक्य हनुमता तन्मतभेदनपूर्वकम् अङ्गदस्य सुग्रीवसमीपगमनाय नियोजनम् ।

५५ अथ हरीणां प्रायोपवेशः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति किष्किन्धाकाण्डविषयानुक्रमणिका समाप्ता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

## अथ सुन्दरकाण्डविषयानुक्रमणिका ५.



१ अथ हनुमतो महेन्द्रशिखरादाकाशसरणिगमनम्, तं प्रति तत्पर्वतस्थविद्याधरमहर्षिगणकृतसंस्तुतिः, तस्य मध्येसमुद्रं मैनाकपर्वतदर्शनम्, तस्य पराक्रमपरीक्षणसमुत्सुकदेवगणप्रेषितसुरसाविजयः, ततस्तस्य च्छायाग्राहिसिंहिकाप्रमापणम्, ततस्तस्य लङ्काद्वीपप्रवेशश्च ।

२ अथ हनुमतो लङ्काद्वीपपर्वतस्थनानातरुगणनदीप्रस्रवणादिदर्शनम्, तस्य निश्श्वासलेशं विनैव सागरलङ्घनम्, तस्य लङ्कादर्शनम्, ततो लङ्काप्रवेशोपयिकस्वल्पशरीरपरिग्रहणम्, तदा लङ्कासमीपोपसर्पणम्, तदानीं चन्द्रोदयश्च ।

३ अथ हनुमतः लङ्काधिदेवतया निरोधनम्, पश्चादेकमुष्टिप्रहारजर्जरिताङ्गया तया ब्रह्मदत्तवरप्रकारकथनपूर्वकं हनुमतो लङ्काप्रवेशानुज्ञापनं च ।

४ अथ हनुमतोऽद्वारेण लङ्कानगरप्राकारलङ्घनपूर्वकलङ्काप्रवेशः, तस्यात्यद्भुतरक्षोगणहर्म्यमण्डलदर्शनपूर्वकं नगरमध्यनिक्षिप्तरावणमूलबलदर्शनं रावणान्तःपुरप्रवेशनं च ।

५ अथ हनुमतः वियन्मध्यगतचन्द्रप्रकाशदर्शनेनामोदनम्, ततस्तेन नानाविधराक्षसकुटुम्बिनीगणदर्शनेऽपि जानक्यदर्शनेन शोचनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

६ अथ हनुमतः रावणाधिष्ठितान्तर्नगरदर्शनम् ।

७ अथ हनूमतः रावणान्तर्नगरवर्तिगृहगणदर्शनपूर्वकं पुष्पकाविमानदर्शनम् ।

८ अथ हनूमतः पुष्पकविमानवर्णनम् ।

९ अथ हनूमतः रावणान्तःपुरदर्शनम्, तत्रत्याद्भुतभवनगणरामणीयकदर्शनपूर्वकं पुष्पकाधिरोहणम्, ततोऽन्तःपुरशयनानेकदेवदानवादिप्रमदाजनपरिवृतरावणदर्शनपूर्वकं तस्यैश्वर्यदर्शनव्यामुग्धत्वम्, तस्य सीता विषयापराधकरणंम्, सद्यः समूलनाशहेतुरिति चिन्तनं च ।

१० अथ हनुमतः रावणोपान्तभागेषु वादनाय मुरजपणवादिवाद्यविशेषान्पाननिद्रापारवश्येनालिङ्गय स्वपत्नीनां स्त्रीणां सम्यग्दर्शनम्, तत्रैव पृथक्छयने शयानां दिव्यसौन्दर्ययुक्तां मन्दोदरीं वीक्ष्य सीतेति मननं च ।

११ अथ हनुमतः सीतायाः रामविश्लेषे स्वप्राणत्यागपर्यन्तप्रयत्नकरणार्हतां दृश्यमानायाः स्त्रियास्तद्विरुद्धसुखसुप्तिमत्त्वादिकं चालोच्यान्येयमिति निश्चयकरणम्, ततो नानामृगमांससुराधिवासितपानभूमिप्रवेशपूर्वकं तत्रत्यनारीजनशयनकदम्बदर्शनम्, प्रसुप्तपरदारदर्शनेन महानधर्मो जात इति भयप्राप्तिः, स्त्रिष्वन्तरास्त्रीमार्गणाशक्यत्वस्वनिर्विकारचित्तत्वपर्यालोचनेन पुनस्तन्निवृत्तिः अन्तःपुरमार्गणप्रयत्नश्च ।

१२ अथ हनुमतः सीताऽदर्शनेन स्वकृतसमुद्रलङ्घनवैयर्थ्यचिन्तनम्, ततस्तस्य पुनर्गमनेन जाम्ब-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

वत्प्रमुखप्रायोपवेशचिन्तनम्, पुनरपि धैर्यं कृत्वान्तःपुरप्रदेशविचयनम्, तावतापि सीतादर्शनाभावाद्विषादागमश्च ।

१३ अथ हनुमतः अशोकवनिकाप्राकारारोहणम्, ततोऽनेकविधमार्गणेऽपि सीताया अदर्शनात् सीतामरणादिचिन्तनम्, सीतामदृष्ट्वा स्वस्य गमने श्रीरामादीनां मरणचिन्तनम्, स्वस्य लङ्कापरिसरे विषोद्बन्धनाद्युपायैः प्राणत्यागचिन्तनम्, ततोऽशोकवनिकामात्रमार्गणकर्तव्यशेषनिश्चयः, ततः सीताधिगमसिद्ध्यै निखिलदेवतानमस्कारप्रार्थनं च ।

१४ अथ हनुमतोऽशोकवनिकाप्रवेशः, तत्रत्यनानाविधवृक्षजालनदीवापीक्रीडापर्वतप्रभृतिदर्शनपूर्वकमत्यद्भुतशिंशपावृक्षदर्शनम्, ततस्तमारुह्य तद्देशरामणीयकं दृष्ट्वा यदि सीतात्र तिष्ठेत्तर्ह्येव सन्ध्याद्यर्थमागच्छेदिति चिन्तनं च ।

१५ अथ हनुमतोऽशोकवनिकामध्यवर्तिहेमस्तम्भप्रासादे शिल्पदर्शनम्, ततो दैवात्तत्र राक्षसीगणपरिवृतसीतादर्शनम्, ततस्तां मलिनसंवीतत्वादिभिर्लिङ्गैः सीतेयमित्यनुमानपूर्वकं सीतेति निर्णयश्च ।

१६ अथ हनुमान् सीतायाः वाचामगोचरदुर्दशां प्रेक्ष्य स्वयं शाखामृगोऽप्यतीव विललापेति कथा ।

१७ अथ हनुमानेकाक्षिप्रभृती राक्षसीः ताभिः परिवृतां सीतां च सम्यक् प्रेक्ष्य ततः सीतादर्शनसंहृष्टः सन् राक्षस्यदर्शनाय शिंशपायां गूढोऽवसदिति कथा ।

१८ अथ हनुमानपररात्रप्रबुद्धं सीतादिदृक्षया तस्याः समीप आगतं रावणं प्रेक्ष्य शिंशपावृक्षस्याधः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

शाखायामवरुह्य पत्रपुष्पसंवृतोऽतिष्ठदिति कथा ।

१९ अथ रावणः उपवासशोकध्यानभयादिभिरतीव दीनामवाङ्मनसगोचरदुर्दशापन्नां सीतां प्रेक्ष्य स्वाभिप्रायप्रकटनायोपक्रान्त इति कथा ।

२० अथ रावणः सीतां प्रति स्ववशीकरणाय नानाविधप्रार्थनमकरोदिति कथा ।

२१ अथ सीताया रावणोक्तिप्रत्याख्यानपूर्वकं तस्मै स्वस्याः रामाय समर्पणप्रार्थनम्, तदकृत्वा यत्र क्वापि गमनेऽपि रामेण विध्वंसनं तव सिद्धमिति सम्यक्कथनं च ।

२२ अथ सीतां प्रति रावणेन मासद्वयानन्तरमपि मद्वचनानङ्गीकरणे त्वां भक्षयिष्यामीति कथनम्, तं प्रति रामानुज्ञाभावादहं त्वां न भस्मीकरोमीति प्रतिवचनकथनम्, ततस्तेन तस्याः स्वाधीनकरणाय एकाक्ष्यादिराक्षसीनियोजनपूर्वकमन्तःपुरगमनं च ।

२३ अथ सीतां प्रति एकजटाप्रभृतिराक्षसीनां सान्त्वपूर्वकं रावणभार्यात्वाङ्गीकरणप्रार्थनम् ।

२४ अथ पुनस्तासां सीतां प्रति रावणाङ्गीकरणनियोजनम्, ततः शिंशपोपान्तगतां सीतां प्रति पुनस्ताभिस्तर्जनादिपूर्वकं रावणाङ्गीकरणनियोजनम्, ततोऽतीव दैन्येन त्यक्तधैर्यया सीतया रोदनकरणं च ।

२५ अथ सीता राक्षसीः प्रति मानुषी राक्षसस्य भार्या भवितुं नार्हतीत्युक्त्वा अशोकशाखामालम्ब्यातीव शोकेन विलपनं कृतवतीति कथा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

२६ अथ सीता श्रीरामेण स्वानन्वेषणे बहूनि कारणान्याशङ्क्य स्वविषयप्रेमराहित्ये स्वभाग्यहीनतामेव कारणं निश्चित्य स्वस्य मरणमेव श्रेय इति निश्चितवतीति कथा।

२७ अथ त्रिजटाख्यया विभीषणपुत्र्या श्रीरामविजयरावणविनाशसूचकस्वदृष्टस्वप्नविशेषकथनम्, ततो देव्या वामबाह्वादिस्फुरणशारीरनिमित्तदर्शनञ्च।

२८ अथ राक्षसीकृततर्जनभर्त्सनादिभिरतीव शोकमनुभवन्त्याः सीतायाः शिंशपासमीपगमनम्, ततस्तच्छाखां गृहीत्वा वेण्युद्ग्रथनेन प्राणत्यागचिकीर्षणम्, ततः शुभनिमित्तप्रादुर्भावश्च।

२९ अथ सीता स्ववामाक्षिभुजोरुस्फुरणादिनिमित्तैः शकुनादितिनिमित्तैश्चाचिरात्कान्तागमनवार्ताश्रवणं भविष्यतीति प्रहर्षं लेभ इति कथा।

३० अथ पूर्वोक्तवृत्तान्तान् साक्षात्कुर्वता हनुमता सीतासमाश्वासनं प्रति प्रथमं रामगुणकीर्तनं कर्तव्यमिति निश्चितमिति कथा।

३१ अथ हनूमता दशरथगुणप्रशंसापूर्वकश्रीरामगुणप्रशंसनम्, ततस्तस्य वने संभावितसकलवृत्तान्तकथनपूर्वकसुग्रीवमैत्रकिरणकथनम्, तेन नानादिक्षु वानरप्रेषणकथनम्, वानरप्रशंसापूर्वकं स्वेन समुद्रतरणलङ्काप्रवेशकथनम्, ततः शिंशपामूले सीतादर्शनकथनम्, सीतया तच्छ्रुत्वा शिंशपावृक्षे हनुमतो दर्शनं च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

३२ अथ सीता रामवृत्तान्तावेदने स्वप्नत्वादीनारोप्य व्यक्तरूपवानरकर्तृकवचनत्वात्तथात्वं प्रतिषिध्य अनेनोक्तं सत्यमस्त्विति सर्वदेवताप्रार्थनं कृतवतीति कथा ।

३३ अथ शिंशपावृक्षादवतीर्णेन हनुमता सीतेयमिति जानतापि तां प्रति का त्वमित्यादिप्रश्नकरणम्, ततः सीतया आदित आरभ्य वनवासनिमित्तप्रभृति रावणहरणपर्यन्तवृत्तान्तकथनं च ।

३४ अथ हनुमता सीतां प्रति रामलक्ष्मणकुशलकथनम्, तच्छ्रुतवत्या देव्या अतीव सन्तोषणम्, ततो हनुमता देवीवन्दनाय समीपगमनम्, ततः सीतया अयं रावण इति मत्वा प्रत्याख्यानपूर्वकं यदि त्वं रामदूतस्तर्हि रामगुणान्कथयेति नियोजनम्, ततो हनुमता रामगुणकथनेन देवीं प्रहर्षवतीं कृत्वा तां प्रति स्ववचने श्रद्धाप्रार्थनं कृतमित्येताः कथाः ।

३५ अथ हनुमता श्रीरामकल्याणगुणकथनपूर्वकं तेन दिव्यमङ्गलविग्रहचिह्नकथनम्, तस्य सुग्रीवसख्यकथनपूर्वकंनानादिक्षु प्रेषितवानरेषु दक्षिणदिक्प्रेषिताङ्गदादीनां स्वेषां कालातिक्रमेणप्रायोपवेशकरणप्रभृति स्वेन शतयोजनपारीमितसागरलघंनाद्यशोकवानिकाप्रवेशपर्यन्तवृत्तान्तकथनंसीताप्रत्ययोत्पादनमकारीत्येताःकथाः।

३६ अथ हनुमता सीतायै रामदत्ताङ्गुलीयकदानम्, ततो देव्या स्वानानयनकारणप्रश्नकरणम्, ततो हनुमता श्रीरामस्य सदा सीताशोकपारवश्यनिवेदनम्, ततः स्थानापरिज्ञानमेव अनानयनकारणमिति समाश्वासनं च ।

३७ अथ सीतया स्वस्या रावणकृतमासद्वयात्मकजीवितानुग्रहकालनिवेदनम्, ततः स्वपृष्ठमारोप्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

रामसन्निधिं नयामीति हनुमता प्रार्थनम्, ततो देव्या रामेणैव रावणविध्वंसनपूर्वकं स्वानयनं कर्तव्यमिति प्रतिवचनदानं च कृतमिति कथा ।

३८ अथ हनुमता देवीं प्रति श्रीरामाय प्रत्यभिज्ञानप्रार्थनम्, ततो देव्या काकासुरवृत्तान्तकथनपूर्वकं चूडामणिप्रदानम् ।

३९ अथ देव्या हनुमन्तं प्रति वानरसैन्यस्य रामलक्ष्मणयोश्च समुद्रलङ्घनं कथमितिप्रश्नकरणम्, ततस्तेन वानराणां सर्वत्राप्रतिहतगमनकथनम्, स्वस्कन्धमारुह्य रामलक्ष्मणयोरागमनपूर्वकं श्रीरामो रावणं हत्वा पुरीं यास्यतीति समाधानं च ।

४० अथ सीतया हनुमद्वचनश्रवणेन सन्तोषजननम्, पुनः कदाचित् श्रीरामेण मृष्टतिलकायाः स्वस्या मनःशिलया तिलकनिर्माणकथनम्, स्वोत्तारणत्वराकरणप्रार्थनपूर्वकं हनुमद्गमनाभ्यनुज्ञानम्, ततो हनुमता स्वकर्तव्यकार्यशेषाचिन्तनं च ।

४१ अथ हनुमता रावणहृदयपरिज्ञानाय तत्समीपगमनभाषणाद्यपेक्षाचिन्तनम्, तदौपयिकतया अशोकवानिकाविध्वंसनं च ।

४२ अथ रावणेनराक्षसीगणमुखादशोकवनिकाभङ्गवृत्तान्तश्रवणम्, ततस्तेन प्रेषिताशीतिसहस्रसङ्ख्याककिङ्कराख्यराक्षसानां हनुमता विध्वंसनम् ।

४३ अथ हनुमता चैत्यप्रासादस्थराक्षसविध्वंसनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

४४ अथ हनुमान् स्वविध्वंसितकिङ्करचैत्यराक्षसगणवृत्तान्तश्रवणकुपितरावणप्रेषितं प्रहस्तपुत्रं जम्बुमालिनामानमवधीदिति कथा ।

४५ अथ हनुमान् रावणप्रेरितान् सप्तमन्त्रिसुताञ्जघानेति कथा ।

४६ अथ हनुमान् रावणप्रेरितान् विरूपाक्षयूपाक्षदुर्धरप्रघसभासकर्णाख्यान् पञ्च सेनानायकान् प्रमापयामासेति कथा ।

४७ अथ हनुमान् अक्षकुमारमवधीदिति कथा ।

४८ अथ हनुमानिन्द्रजिता ब्रह्मास्त्रेण बद्धः सन् रावणान्तिकं नीत इति कथा ।

४९ अथ हनुमान् रावणं दृष्ट्वा तदीयतेजोविशेषेणातीव विस्मितोऽभूदिति कथा ।

५० अथ प्रहस्तेन हनुमन्तं प्रति कस्य दूतस्त्वमिति प्रश्नकरणम्, ततो हनुमता रावणं प्रति रामदूतोऽहमिति कथनं च ।

५१ अथ हनुमता रावणं प्रति रामवनवासप्रभृति स्वागमनपर्यन्तवृत्तान्तकथनपूर्वकं रामाय सीतासमर्पणं हितमित्युपपादनम्, ततः सीताया अप्रदाने रावणप्राणत्राणं दुःशकमित्युपदेशश्च ।

५२ अथ रावणेन हनुमद्वधाय ज्ञापनम्, ततो विभीषणेन दूतवधस्य गर्हितताप्रदर्शनपूर्वकं वैरूप्यकरणादेरेव युक्तताप्रदर्शनम्, ततो रावणेन तदङ्गीकरणं च ।

५३ अथ राक्षसै रावणाज्ञया जीर्णपटादिभिर्हनुमत्पुच्छसंवेष्टनतैलसेचनाग्निसंयोजनपूर्वकं लङ्कायां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

सर्वतो नयनम्, ततो राक्षसीभिः सीतायै तद्वृत्तान्तकथनम्, ततो देव्या हनुमतो दाहाभावायाग्न्युपासनम्, ततः प्रदीप्तमपि वालस्थमग्निं पीडामकुर्वन्तं प्रसमीक्ष्य हनुमता सीतारामप्रभावादग्नेः शीतलतेति निश्चयकरणम्, ततोऽतिह्रस्वीभवनाद्विनिर्धूतनिखिलबन्धनतया नगरपरिघनिपातेन निखिलरक्षोवर्गविध्वंसनं च।

५४ अथ हनुमता स्वलाङ्गूलप्रज्वलदग्निना विभीषणगृहमन्तरा रावणगृहप्रभृति समस्तराक्षसगृहभस्मीकरणम्।

५५ अथ हनुमता जानक्यपि दग्धेत्यन्तस्तापकरणम्, ततश्चारणवचनैर्जानक्यदाहश्रवणपूर्वकं प्रत्यक्षतः सीतासन्दर्शनम्, ततः प्रतिप्रयाणसङ्कल्पश्च।

५६ अथ हनुमता स्वचरणनिपीडनेन तत्रत्यमरिष्टाख्यं धरणीधरं धरणीसमताकरणपूर्वकमाकाशसरणिगमनम्।

५७ अथ पुनर्हनुमता यथागतं समुद्रतरणम्, ततः स्वबाहूरुवेगगर्जनश्रवणसम्मोदितनिखिलवानरेभ्यो दृष्टा सीतेति कथनम्, ततो जाम्बवत्प्रमुखैः समुद्रतरणप्रभृत्युदितसकलवृत्तान्तकथनप्रार्थनं च।

५८ अथ हनुमता वानरकौतुकफलीकरणाय स्वकृतसमुद्रलङ्घनादिवृत्तान्तस्य विस्तरेण निवेदनम्।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

५९ अथ हनुमता सीतादुर्दशाविचिन्तनजनितत्वरया जाम्बवदाद्यनुज्ञां कारयित्वा तैः सह पुनर्लङ्कां गत्वा रावणं हत्वा सीतामादाय राघवौ द्रक्ष्याम इति कथनम् ।

६० अथाङ्गदेनापि हनुमन्मतानुसारेण स्वाभिप्रायकथनम्, ततो जाम्बवदादिभिः रामाज्ञानुसारेणैव कर्तव्यमिति हनुमदङ्गदयोर्मतानिवर्तनं च ।

६१ अथ हनुमदङ्गदादिभिः श्रीरामसमीपगमनाय प्रतिप्रयाणम्, ततो मध्येमार्गे मधुवनगमनम्, ततः सर्वैरङ्गदं प्रति मधुयाचनम्, ततोऽङ्गदेन तथाभ्यनुज्ञानेपूर्वकयथेष्टमधुपानम्, ततो वनपालदधिमुखप्रत्याख्यानं च ।

६२ अथ हनुमदङ्गदाभ्यां पुनर्दत्तावलम्बैर्वानरैर्मधुवनभञ्जनम्, पुनर्दधिमुखेन तेषां निवारणपूर्वकं वनपालैः सहागत्य सुग्रीवचरणयोर्वन्दनं च ।

६३ अथ दधिमुखेन सुग्रीवायाङ्गदादिभिर्मधुवनभञ्जनवृत्तान्तनिवेदनम्, ततः सुग्रीवेण अङ्गदादिभिर्मधुवनस्य प्रभग्नत्वात् सीतादर्शनं सिद्धमिति लक्ष्मणाय कथनम्, ततो दधिमुखं प्रति तान् द्रुतमेव प्रेषयेत्युक्तिपूर्वकं मधुवनं प्रति तत्प्रेषणं च ।

६४ अथ पुनर्दधिमुखेन अङ्गदादीन् प्रति सुग्रीवसमीपगमनम्, ततो हनुमता श्रीरामादिवन्दनपूर्वकं दृष्टा सीतेति कथनम्, ततः श्रीरामेण सबहुमानाद्धनुमदवेक्षणं च ।

६५ अथ हनुमता श्रीरामसन्निधौ सीतावृत्तान्तनिवेदनपूर्वकं चूडामणिदानम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

६६ अथ मणिदर्शनेन रामविलापः ।

६७ अथ हनुमता विस्तरेण सीतासन्देशकथनम् ।

६८ अथ पुनरपि हनुमता सीताकृतवानरसमुद्रतरणोपायप्रश्नकथनम्, ततस्तेषां समुद्रलङ्घनशक्तिकथनपूर्वकं रामलक्ष्मणौ मत्पृष्ठमारूढावेवागमिष्यतः, ततः सर्वथा रामः क्षिप्रमेव रावणं हत्वा त्वां प्राप्य पट्टाभिषिक्तो भविष्यतीति प्रतिकथितमिति रामसन्निधौ विज्ञापनं च ।

इति सुन्दरकाण्डविषयानुक्रमणिका समाप्ता ।

## अथ युद्धकाण्डविषयानुक्रमणिका ६.

१ अथ श्रुतसीतावृत्तान्तः श्रीरामः सुग्रीवादीनामुत्साहं वर्धयन् समाहृतसीतावृत्तान्तं हनुमन्तं सर्वस्वदानात्सहस्रशोऽतिशयितेन श्रीमज्जनकराजतनयानुभूतेन निजपरिष्वङ्गेण सत्करोति स्मेत्याह ।

२ अथ दुस्तरसागरादिचिन्तया सीतासंश्लेषत्वरया च शोचन्तं श्रीरामं सुग्रीवः समाश्वासयामासेत्यवोचत् ।

३ अथ सुग्रीववचनप्रतिष्ठापितधैर्येण रामेण हनुमन्तं प्रति संहार्यशत्रुपुरदुर्गस्वरूपादिप्रश्नम्, तस्य हनुमता लङ्कानगरप्राकारदुर्गसेनागुप्तिपरिवादीन् विविच्य प्रतिपादयता उत्तरदानं चाभ्यधत्त ।

४ अथ श्रुतलङ्कादुर्गगुप्तिवृत्तान्तेन श्रीरामेण तदानीमेव विजयमुहूर्ते सुग्रीवं प्रति सकलवानर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

सेनया सह प्रस्थानार्थ नियोजनम्, वानरसेनाया मुखपार्श्वद्वयकुक्षिजघनप्रदेशरक्षणाय तदुचितयूथपतिनियोजनम्, ततः श्रीरामाज्ञया निखिलवानरसेनया सह सुग्रीवस्य प्रस्थानम्, रामलक्ष्मणयोर्हनुमन्तमङ्गदं चारूढयोः प्रस्थानम्, तदा सञ्जातानि शुभनिमित्तानि सूचयता लक्ष्मणेन श्रीरामं प्रति हर्षसंवर्धनवचनजातम्, अथ मार्गमध्ये स्थितान् विविधान् वृक्षादीन् भञ्जयतामसङ्ख्यानां वानराणां गमनकोलाहलम्, एवमहोरात्रं गच्छन्त्या वानरसेनायाः सह्याद्रिसमुपतोलनपूर्वकं महार्णवसमीपगमनम्, अथ सुग्रीवाज्ञया नीलेन समुद्रतीरे निवेशितायाः वानरसेनायाः समुद्रप्रेक्षणकोलाहलश्च ।

५ अथाद्भुततरङ्गमृदङ्गरवमहार्णवमहारङ्गसमीक्षणसमुपजातसीतास्मृतेः श्रीरामस्य शोकवचनजातम्, लक्ष्मणेन तत्समाधानं चाचख्यौ ।

६ अथ लङ्कायां हनुमत्कृतविविधव्यथावेपितहृदयेन रावणेन मन्त्रिणः प्रति मन्त्रप्रकाराविवेचनपूर्वकम् आगमिष्यत्ससैन्यरामप्रतिघातोपायरूपविषयप्रदर्शनपूर्वकं च कर्तव्यहितविचाराय नियोजनं चादर्शयत् ।

७ अथ विज्ञातरामशरवेगवैभवै राक्षसैः पूर्वं रावणकृतदिग्विजयादिनिदर्शनेन रावणप्रशंसापूर्वकमिन्द्रजिन्मात्रेणैव रामजयस्य साध्यताकथनेन निगमनमचीकरत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

८ अथ पुनः प्रहस्तदुर्मुखवज्रदंष्ट्रनिकुम्भैः प्रत्येकं स्वस्ववीर्यश्लाघापूर्वकमेकैकगमनेनैव रामजयस्य साध्यता रावणाय निवेदितेति न्यवेदयत् ।

९ अथ निकुम्भरभससूर्यशत्रुसुप्तघ्नयज्ञघ्नमहापार्श्वमहोदराग्निकेतुरश्मिकेत्विन्द्रजित्प्रहस्तविरूपाक्षवज्रदंष्ट्रधूम्राक्षातिकायदुर्मुखान् रामजयं लीलासाध्यं मन्यमानान् गृहीतायुधान् प्रास्थितांश्च दृष्ट्वा निखिलपुरुषसारासारविवेकभूषणो विभीषणस्तान्निवार्य रावणाय रामजयस्यासाध्यतां परदारनियोजनस्य हेयतां रामस्य निरपराधतां विराधादिवाल्यन्तवीरजननिरसनस्वभावं रामप्रभावं च निवेद्य सीताप्रतिप्रदानस्यावश्यकर्तव्यतां ज्ञापयामासेति ख्यापयामास ।

१० अथ पुनः परस्मिन्नहनि कृतधर्मार्थनिश्चयेन प्रज्ञाताधर्ममार्गदूषणेन विभीषणेन अग्रजसदनं गतेन तस्मै सीतानयनप्रभृति लङ्कायां जातानि नानाविधानि दिव्यभौमभौतिकदुर्निमित्तानि सम्यङ्निवेद्य तच्छान्तितया रामाय सीताप्रदानकर्तव्यतायां पुनरुपदिष्टायां तदानीं तच्छ्रवणजातक्रोधेन रावणेन विभीषणोक्तमार्गस्यायुक्तताप्रदर्शनपूर्वकं तं विसृज्यान्तःपुरं प्राविश्यतेत्यदर्शयत् ।

११ अथ परेद्युर्विभीषणाद्युपदेशजनितचिन्ताव्याकुलहृदयेन रावणेन मन्त्रकरणाय तदुचिता सभा मन्त्रिभिः सह प्राविष्टेत्याह ।

१२ अथ स्वाभिमतानुसारेण मन्त्रचिकीर्षू रावणः नगररक्षाविधानपूर्वकं परिषन्मध्ये स्वाभिमतं सीतामप्रदाय रामनिरसनतदुपायचिन्ताकर्तव्यतां च मन्त्रिभ्यः कथयामास, अथ कुम्भकर्णः कुपितः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

सन् दैवात्त्वं जीवसि यदस्माभिरनालोच्य महावीरेण रामेण वैरमुदपादयः अत इदानीमालोचनाकरणं भुक्तवस्तुसदसद्विचारतुल्यम् , अथापि मत्पराक्रमेण सर्वं समीकरिष्यामीत्यभाणीदित्यवोचत् ।

१३ अथ कुपितं रावणं प्रति महापार्श्वेन सीतां बलात्कारेणानुभवेत्युपदेशः, ततो रावणेन पूर्वं पुञ्जिकस्थलाबलात्कारसम्भोगकुपितपितामहशापेन सीताबलात्कारे शिरःकपालं स्फुटीभविष्यति अतः तथा कर्तुं चिन्तयितुमपि न शक्यमिति प्रत्युत्तरदानम् ।

१४ अथ तत्र पुनर्विभीषणेन श्रीरामस्य सर्वैरपि दुर्जयताप्रतिपादनपूर्वकं सीताया अप्रदाने निखिलराक्षसविनाशो रावणस्य च विनाशः सिद्ध इति प्रतिपादनपूर्वकं च सीतायाः प्रदानस्यैव सर्वराक्षसक्षेमहेतुता प्रतिपादितेति कथा ।

१५ अथेन्द्रजिता विभीषणाधिक्षेपणम् , ततो विभीषणेन तद्भर्त्सनपूर्वकं पुनः सीताप्रदानस्यैव कर्तव्यतोपदेशनं च ।

१६ अथ परमात्मतमस्य परमहितमुपदिशतो विभीषणस्य रावणेन निर्भर्त्सनम्, ततो विभीषणेन अप्रतीकारदैवसंविधानसंप्राप्तविनश्यदवस्था भवादृशाः कथं हितं गृह्णीयुः अथाप्युच्यते सर्वथा आत्मानं लङ्कां च रक्षेति प्रत्युत्तरप्रदानं च ।

१७ अथैवमुक्तवतो गदापाणेः सचिवचतुष्टयसहितस्य विभीषणस्य मुहूर्तमात्रेणातिक्रान्तसागरस्य राघवसमीपागमनम्, अथैनं सायुधं चतुर्भिः सहागच्छन्तं प्रेक्ष्य सुग्रीवेणातीव शङ्कितेनानुचरैः सह

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

तद्वधाय प्रयतनम्, तावदाकाशस्थस्यैव विभीषणस्यादिदुष्टरावणसम्बन्धं तद्धितोपदेशप्रतिक्रियारूपतया तत्कृतमवमानं च पुरस्कृत्य परित्यक्तत्याऽन्यस्य गृहीतग्राह्यस्य परिगृहीतसुग्रीवादिपुरुषकारस्य स्वस्याकिञ्चनस्यानन्यगतिकस्य श्रीराम एव शरणमित्युद्घोषणम्, तच्छ्रुतवता सुग्रीवेण श्रीरामसन्निधौ तच्छरणागतिनिवेदनपूर्वकं तस्य रावणानुजतया सद्य एव वध्यता युक्तेति सनीतिवचनम् , अथ तच्छ्रवणसंक्षुब्धमनसा शरणागतरक्षणदीक्षितेन रघुवीरेणाङ्गदजाम्बवच्छरभमैन्दहनुमदादीन् प्रति स्वस्वाभिमतकथनाय नियोजनम्, अथाङ्गदादिभिः शत्रुपक्षाददेशकाले समागतोऽयं विभीषणः सर्वथा परीक्षार्ह एवेति कथनम्, ततो हनुमता सुग्रीवन्यायेन राज्याभिलाषेणैवायमागतो विभिषणः परिग्राह्य एवेति निगमितमित्यभ्यधत्त ।

१८ अथ श्रीरामेण शरणागतसंरक्षणमेव स्वस्य महाव्रतमिति कथितवता स्वप्रेमकलुषितं सुग्रीवहृदयं स्वकीयसर्वशक्तताप्रदर्शनेन कपोताख्यानकण्डुगाथाप्रदर्शनादिभिश्च निष्कल्मषीकृतवता सुग्रीवं प्रति विभीषणानयनाय नियोजनं च ।

१९ अथ विभीषणस्य श्रीरामसमागमः, तदैव श्रीरामनियुक्तेन लक्ष्मणेन विभीषणस्य सर्ववानरमध्ये लङ्काराज्याधिराजतया समुद्रजलेनाभिषेचनम्, अथ सुग्रीवलक्ष्मणाभिमतस्य विभीषणोपदिष्टस्य समुद्रतरणोपायस्य तच्छरणागतिरूपस्य श्रीरामेणाङ्गीकरणं च ।

२० अथ शार्दूलाख्येन चारेण समुद्रतीरमागतं ससैन्यं रघुनन्दनं श्रुतवता रावणेन प्रेषितस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

शुकस्य शुकरूपस्य राक्षसस्य रामसेनावकाशमागतस्य सुग्रीवं प्रति रावणोक्तभेदकवचनसमर्पणम्, तावदेव वानरैस्तद्धननाय प्रयतनम्, ततस्तदीयार्त्तघोषश्रवणद्रुतहृदयेन सदयेन श्रीरामेण तन्मारणहरणं चाह ।

२१ अथ सागरतीरे त्रिरात्रं दर्भेषु शयितस्य जानकीदयितस्य तावताप्यप्रत्यक्षं समुद्राध्यक्षं देवमुद्दिश्यातिकोपेन सागरोपरि कालानलकल्पानां वेगेनानल्पानां बाणानां प्रयोगस्तेन सञ्जातसमुद्रक्षोभः; तावल्लक्ष्मणेन रामकोपानलनिर्वापणाय प्रयत्नश्च ।

२२ अथ तथाप्यनाविर्भूतं प्रभूतमदमुद्रं समुद्रं प्रति श्रीरामेण ब्रह्मास्त्रमन्त्रितस्य नियमयन्त्रितस्य शरवरस्य धनुषि सन्धानम्, ततः सर्वलोकसंक्षोभणम्, ततः प्रत्यक्षतामागतेनापांनिधिना विधिना राममुपपन्नेन सेतुबन्धनाय नलं नियोजितवता स्वात्मोपरि प्रतिसंहितं ब्रह्मास्त्रं कस्मिंश्चिन्मरुदेशे वियोजितववान्तर्धानम्, ततो वानरैर्नलमुपधाय नानावृक्षलतागुल्मगण्डशैलशिखराशिखरिनिकरपारिकरैः पञ्चभिरहोभिरासुवेलमतिविशालस्य सकललोकक्षेमहेतोः सेतोर्निर्माणम्, अथ हनुमन्तमङ्गदं चाधिरूढाभ्यां रामलक्ष्मणाभ्यां सुग्रीवेण निखिलवानरसेनया च सह तेनैव सेतुना सागरतरणम्, सेनायाः सुवेलप्रान्ते निवेशनम्, तत्तादृशं सेतुबन्धनं निरीक्ष्य विस्मयपरवशैर्निर्जरव्रातैः श्रीरामसंस्तवश्च ।

२३ एवं रामो नलसेतुना तीर्णमहार्णवो महासमरसूचकान् महोत्पातान् दृष्ट्वा चिरप्रार्थिताभीष्टसिद्धिर्भविष्यतीति संतुष्टो दृष्टानि निमित्तानि लक्ष्मणायादर्शयदिति वर्णनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

२४ अथात्युन्नतत्रिकूटशिखरिशिखराग्रभुवि विश्वकर्मणा निर्मितां लङ्कां लक्ष्मणाय सम्प्रदर्शयता तद्दर्शनजनितसीतादुर्दशास्मरणकन्दलितसमरत्वरेण रघुवरेण बलौघस्य शिरःपक्षपुच्छादिरूपेण विभागपूर्वकं सुग्रीवं प्रति रावणचारभूतशुकमोचनाय नियोजनम्, ततो विमुक्तेन शुकेन रावणसमीपं गतेन वानरसेनाया असाध्यतां सागरेण सेतुबन्धनं तन्मार्गेण तीर्णसमुद्रस्य श्रीरामस्य ससैन्यस्य सुवेलोपान्ते निवेशनं च निवेद्य रामाय सीताप्रदानमेव कर्तव्यमिति रावणाय विज्ञापनम्, तावत्परिकुपितेन रावणेन तदधिक्षेपणं चाह।

२५ अथ पुना रावणप्रहिताभ्यां शुकसारणाभ्यां वानरसैन्यं प्रविष्टाभ्यां विभीषणेन गृहीत्वा वध्यत्वेन रामसमीपं नीताभ्यां तदा यथार्थवचनप्रीतेन श्रीरामेण विभीषणमेव सहायीकृत्य सर्ववानरसेनापरिज्ञानपूर्वकं यथेष्टं गमनाय नियुक्ताभ्यां पुनरागताभ्यां रावणाय सङ्ग्रहेण सर्ववृत्तान्तो न्यवेदीति कथा।

२६ अथ वानरसेनादिदृक्षयात्युन्नतं प्रासादमधिरूढाय रावणाय सारणेन वानरयूथपतीनां वीर्यादिकथनपूर्वकमङ्गुल्या निर्दिश्य तत्तत्प्रदर्शनम्।

२७ अथ पुना रावणाय सारणेन उक्तेभ्योऽप्युत्कृष्टाः प्रधानयूथपतयः प्रदर्शिताः।

२८ अथ शुकेन रावणाय सारणानुक्तानां प्रदर्शनम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

२९ अथ रावणेन शुकसारणधिक्कारपूर्वकं शार्दूलादीनां चाराणां पुनः प्रेषणम्, तैर्वानरसेनां गतैर्विज्ञातरामागमनवृत्तान्तैः कथञ्चिद्दयालुना श्रीरामेण मोचितैः पुनर्लङ्कां प्रतिगमनं च ।

३० अथ रावणाय शार्दूलादिभिः सुवेलोपान्तमागतः ससैन्यः श्रीरामो जगद इति जगाद ।

३१ अथ रावणो मायाविना विद्युज्जिह्वेन छिन्नं रामशिरः सज्यं धनुः सीताप्रेषितचूडामणिं च मायया निर्माय तत्सर्वं सीतायै दर्शयित्वा तां मोहयामासेति कथनम् ।

३२ अथ तत्सर्वं दृष्ट्वा भर्तारं रामं मृतं मन्यमानया सीतया प्रालप्यतेति कथा ।

३३ अथ विभीषणभार्या सीतां समाश्वासयति स्मेत्याह ।

३४ अथ सरमया रावणाशयपरिज्ञानमुपपादयामास ।

३५ अथ रावणस्य माल्यवता सीतामोक्षणकर्तव्यतोपदिष्टेति कथनम् ।

३६ अथ रावणेन लङ्कागुप्तिकरणं न्यदर्शि ।

३७ अथ रामेण स्वसेनागुप्तिकरणमभ्यधायि ।

३८ अथ श्रीरामस्य लङ्कादर्शनार्थं सुवेलारोहणम् ।

३९ अथ लङ्कादर्शनम् ।

४० अथ सुग्रीवरावणयोर्द्वन्द्वयुद्धकथनम् ।

४१ अथ द्वन्द्वयुद्धे रावणं निर्जित्य पुनरागतेन सुग्रीवेण रामस्य समागमः, ततो रामेणासङ्ख्येयहारि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

राक्षसध्वंससूचकनिमित्तकथनपूर्वकं रावणसकाशं प्रत्यङ्गदस्य दूततया प्रेषणम्, तस्य पुनरागमनम्, ततो रामेण निखिलवानरसेनासहितेन लङ्कानिरोधनं च ।

४२ अथ सीतादुर्दशाविचिन्तनविद्रुतहृदयेन श्रीरामेण प्रोत्साहितानां वानराणां राक्षसानां च परस्परं युद्धारम्भकथनम् ।

४३ अथ वानराणां राक्षसानां च द्वन्द्वयुद्धप्रकारवर्णनम् ।

४४ अथ तेषां रात्रियुद्धप्रवृत्तिः, तदाङ्गदेनेन्द्रजितः पराजयश्च । अथ पराजयविवृद्धकोप इन्द्रजिन्नागपाशेन रामलक्ष्मणौ निर्बद्धुमुपचक्रामेत्याह ।

४५ अथ तेनेन्द्रजिता नागपाशेन रामलक्ष्मणौ बद्धावित्याह ।

४६ अथ नागपाशबद्धयो रामलक्ष्मणयोः समीपे सुग्रीवविभीषणादीनां गमनम्, तदवस्थरामलक्ष्मणदर्शनेन तेषां विषादः, विभीषणेन मायासाचिव्येनेन्द्राजिद्दर्शनम्, अथेन्द्राजिता स्वप्रशंसापूर्वकं निखिलयूथपताडनम्, अथ तदवस्थरामलक्ष्मणदर्शनजनितमहाभयस्य सुग्रीवस्य विभीषणेन रामलक्ष्मणमुखप्रसादादिप्रदर्शनेन तयोर्जीवनसिद्धिं प्रदर्शयता समाश्वासनपूर्वकं वानरसेनासंस्तम्भनम्, इन्द्राजिता नगरगतेन स्वपित्रे रामलक्ष्मणबन्धनकथनं च ।

४७ अथ रावणाज्ञया पुष्पकमारोपितायै रणभूमिं च नीतायै सीतायै राक्षसीभिर्वीरशयनस्थयो रामलक्ष्मणयोः प्रदर्शनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

४८ अथ तदवस्थयो रामलक्ष्मणयोर्दर्शनेन सीतया विविधं प्रालप्यतेति कथनम् ।

४९ अथ दृढसत्त्वतया प्रबुद्धेन रामेण लक्ष्मणं प्रत्यनुशोचनम्, सुग्रीवस्य सबलस्य कृतोपकारांशश्लाघनपूर्वकं किष्किन्धां प्रति गमनानुज्ञानम्, अत्रान्तरे वानरसेनां सर्वतः पर्यवस्थापितवतो विभीषणस्य रामसकाशे प्रत्यागमनम, तदानीमागच्छन्तं विभीषणमिन्द्रजितं मन्यमानैर्वानरैः पलायनं च ।

५० अथागतेन विभीषणेन रामलक्ष्मणयोस्तादृशीं दशां दृष्टवता बहुशोऽनुशोचनम्, तस्य सुग्रीवेण समाश्वासनम्, अथ पुनः सुग्रीवेण सुषेणं प्रति रामलक्ष्मणयोः किष्किन्धानयनाय नियोजनम्, तेन च क्षीरोदसागरस्थितमहौषध्यानयनाय वानराः प्रेषितव्या इति कथनम्, तत्समये गरुत्मत आगमनम्, नागपाशविमोचनम्, अथ प्रबुद्धयोः रामलक्ष्मणयोः स्वसख्यसूचनकुशलप्रश्नपूर्वकं गरुत्मतो गमनम्, अथ रामलक्ष्मणनिरुपद्रवोत्थानदर्शनप्रवृद्धानन्दैर्वानरैः सिंहनादकरणं च ।

५१ अथ निशीथे वानरसेनागर्जनजनितसंशयेन रावणेन दूतैर्विज्ञातरामवृत्तान्तेन धूम्राक्षो युद्धाय प्रेषितो नगरात् सह चतुरङ्गबलेन निर्गत्य रामपालितां वानरसेनां ददर्शेति वर्णनम् ।

५२ अथ लङ्कायाः पश्चिमद्वारेण निर्गतस्य ससैन्यस्य धूम्राक्षस्य तद्द्वारस्थितेन हनुमता वधः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　विषयाः ।

५३ अथ श्रुतधूम्राक्षवधेन रावणेन वज्रदंष्ट्रस्य प्रेषणम्, तस्य दक्षिणद्वारे निर्गमनम्, तत्सैन्यस्य तद्द्वारस्थाङ्गदसेनया सह युद्धम्, ततोऽतिकुपितेनाङ्गदेन राक्षससेनाविध्वंसनं च ।

५४ अथाङ्गदेन वज्रदंष्ट्रः प्रमापित इति कथा ।

५५ अथ रावणप्रेषितस्याकम्पनस्य लङ्कायाः पश्चिमद्वारान्निर्गतस्य ससैन्यस्य तद्द्वारस्थहनुमत्सेनया सह संयुगं प्रावर्ततेति वर्णनम् ।

५६ अथ हनुमता अकम्पनः प्रमापित इति कथनम् ।

५७ अथ रावणप्रेषितस्तत्सेनापतिः प्रहस्तो नाम राक्षसप्रवरस्त्रिभागबलसंवृतो युद्धाय प्रातिष्ठदित्याह ।

५८ अथ पूर्वद्वारेण निर्गतस्य प्रहस्तस्य तद्द्वाररक्षिणा वानरसेनानायकेन नीलेन कृतस्य वधस्य वर्णनम् ।

५९ अथ स्वयमेव लङ्काया उत्तरद्वारान्निर्गतस्य क्रमेण प्रभग्ननिखिलवानरयूथपजालस्य अमोघशक्त्याभिहतलक्ष्मणस्य सर्वानप्यतिक्रम्य स्वाभिमुखमागतस्य निखिलदेवदानवदर्पघ्नस्य रावणस्य किरीटराजः श्रीमता राजराजेन रघुवीरेण प्राभज्यतेति कथा ।

६० अथ रामबाणवेगान् स्मारंस्मारमतीव बिभ्यता रावणेन कुम्भकर्णो रामं जेष्यतीति प्रत्याशा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

युक्तेन राक्षसान् प्रति तत्प्रबोधनाज्ञापनम्, ततस्तैर्महाप्रयत्नेन कुम्भकर्णप्रबोधनम्, प्रबुद्धेन च तेन रावणसमीपं प्रति प्रस्थानं च ।

६१ अथात्मगेहाद्रावणभवनं प्रति गच्छन्तमतिप्रमाणशरीरं कुम्भकर्णं दृष्टवता रामेण कृतं विभीषणं प्रति कोऽयमिति प्रश्नः, विभीषणेन दत्तं कुम्भकर्णविषयमुत्तरं च ।

६२ अथ रावणभवनमुपागतं कुम्भकर्णं प्रति रावणेन सान्त्वपूर्वकं साम्प्रतिकरामोपद्रवस्य दुर्निवारस्य प्रदर्शनपूर्वकं तदुद्धरणाय प्रार्थनम् ।

६३ अथ कुम्भकर्णेन रावणं प्रति विभीषणस्य मम चाभिमतं सीताप्रदानमार्गं तिरस्कृतवता त्वया महाननर्थः सम्पादित इत्युपालम्भः, ततो रुष्टं रावणं प्रति पुनस्तदानुकूल्येन प्रतिपक्षप्रतिक्षेपप्रतिज्ञानं च ।

६४ अथ मन्त्रिकृतानयपक्षमसहमानो महोदरः कुम्भकर्णं निर्भर्त्सयदित्याह ।

६५ अथ युद्धाय कुम्भकर्णनिर्याणमदर्शयत् ।

६६ अथ कुम्भकर्णस्य वानरैः सह युद्धप्रवृत्तिः, तद्बलाभिहतानामतिभीतानां वानराणां पलायनम्, अङ्गदेन तेषां निवर्तनं च ।

६७ अथाङ्गदवचनप्रतिपन्नधैर्याणां वानरयूथपानां युद्धायावस्थानम्, क्रमेण तेषां कुम्भकर्णेन पराजयः, ततोऽङ्गदस्य कुम्भकर्णेन पराजयः, पश्चात्सुग्रीवस्य कुम्भकर्णेन सह युद्धम्, तदा शैलशृङ्गा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

भिहतस्य भूमौ पतितस्य सुग्रीवस्य विसंज्ञस्य कुम्भकर्णेन ग्रहणम्, अथ सुग्रीवं दोर्भ्यां गृहीत्वा कुम्भकर्णे प्रयाति लङ्काराजवीथीकृतशैत्योपचारलब्धसंज्ञेन सुग्रीवेण तदुत्सङ्गादुत्पत्य दशनैः कुम्भकर्णकर्णनासादिकमाहृतवता पुनर्वानरानीकसमागमनम्, अथ कर्णनासादिच्छेदजातलज्जाकोपेन निरर्गलविनिर्गलद्रुधिरधारासेकसमुपजातहृदयमोहपारिलुलितस्वपरविभागतया वानरानिव राक्षसांश्च भक्षयता अतिपतितसौमित्रिणा स्वाभिमुखमागतेन कुम्भकर्णेन सह रामस्य युद्धम्, अथातिरौद्रबीभत्सकुम्भकर्णदर्शनजिहासासङ्कुचिततद्युद्धलीलारसेन श्रीरामेण क्रमेण तद्बाहुद्वयं तदूरुद्वयं च निकृत्तवता तदास्यं चासङ्ख्येयैः शरैः पूरितवता दिव्येन बाणवर्षेण सकुण्डलस्य तच्छिरसो हरणं च ।

६८ अथ कुम्भकर्णं हतं श्रुतवता रावणेन बहुविधं प्रलप्यतेति कथा ।

६९–७० अथ रावणेन महोदरमहापार्श्वाभ्यां साकं प्रेषितानां तत्कुमाराणां नरान्तकदेवान्तकत्रिशिरोऽतिकायानां चतुर्णां युद्धायागमनम्, तेषु प्रथमतो नरान्तकस्यातिजवनतुरगारूढस्य स्वकरालङ्कारभूतप्रासविक्षेपविध्वस्तसप्तशतवानरयूथस्य तद्भयविद्रवद्वानरसेनासन्दर्शनसमुपजातकोपसुग्रीवप्रेषितेनाङ्गदलसद्बाहुनाङ्गदेनैकमुष्टिप्रहारविध्वस्तनरान्तकवाहनवाजिनां मुष्ट्यन्तरेण निष्पेषणम् । अथाङ्गदस्य नरान्तकवधकुपितैर्देवान्तकत्रिशिरोमहोदरैस्त्रिभिः सह तुमुलं युद्धं समीक्ष्य तत्साहाय्यागतयोर्नीलहनुमतोर्मध्ये हनुमता मुष्टिप्रहारेण देवान्तकप्रमापणम्, अथ नीलेन वृक्षप्रहारेण महोदरहननम्, अथ हनुमत्त्रिशिरसोर्युद्धम्, तत्र हनुमता स्वहस्ततलताडनेन विसंज्ञस्य पतितस्य त्रिशिरसो हस्ताद्-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

गृहीतेनासिना तच्छिरस्त्रितयकर्तनम् , अथ महापार्श्वस्य ऋषभाख्यस्य वानरयूथपस्य चायोधनप्रवृत्ति तत्रर्षभेण वानरर्षभेण महापार्श्वहस्ताद्गदां गृहीत्वा तयैव तद्वधं चाभ्यधत्त ।

७१ अथातिकायस्य युद्धप्रवृत्तिः, अथ तदीयवैलक्षण्यदर्शनेन तत्स्वरूपजिज्ञासया रामेण विभीषणं प्रति प्रश्नः, ततो विभीषणेनायं रावणाद्धान्यमालिन्या जातोऽतिकायनामा महारथो ब्रह्मदत्तवर इत्युत्तरकथनम्, अथातिकायेन स्वाभिमुखागतयूथपजातविध्वंसनपूर्वकं रामान्तिकमागतेन युद्धभीषणम्, अथ सौमित्रेस्तस्य च शस्त्रास्त्रवृन्दैरायोधनम् , अथावध्यकवचस्य तस्य ब्रह्मास्त्रेणैव हन्तव्यतां वायुमुखाच्छ्रुतवता लक्ष्मणेन ब्रह्मास्त्रेणातिकायसंहरणं च ।

७२ अथ रावणेन श्रुतातिकायवधादिवृत्तान्तेन स्वप्रेषितानां सर्वेषामपि राक्षसप्रवीराणामपुनर्निर्वृत्त्या रामपराक्रमः सर्वलोकातिशायीति विचिन्त्य भृत्यानां सर्वसमयेष्वप्रमादेन नगररक्षणविधानाज्ञापनम्, पुनः पुत्रव्यसनेनान्तर्गृहप्रवेशश्चाह ।

७३ अथातिकायादिपुत्रव्यसनिनं रावणं समाश्वास्य अभिचारिकं हुत्वा प्रयातेनेन्द्रजिता ब्रह्मास्त्रेण रामलक्ष्मणपर्यन्तानां सर्वेषामपि वानरयूथपानां मूर्च्छादिपर्यवसायिप्रहरणवर्णनम् ।

७४ अथ हनुमता जाम्बवदुपदिष्टक्रमेण हिमवत्पार्श्ववर्त्योषधिपर्वतानयनम्, तादृशदिव्यौषधिगन्धाघ्राणमात्रेण सर्वेषां वानराणां रामलक्ष्मणयोश्च सुप्रबोधन्यायेन विशल्यतयोत्थानं च ।

७५ अथ तदानीमेव रात्रौ प्रथमयामे सुग्रीवसमादिष्टैर्वानरयूथपैरुल्काहस्तैर्लङ्काप्राकारमुत्प्लुत्यान्तः-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　　　　　　　　　　　　　　　विषयाः ।

प्रविष्टैर्लङ्कादहनम्, ततः कुपितेन रावणेन कुम्भनिकुम्भयोः कुम्भकर्णसुतयोर्यूपाक्षशोणिताक्ष-प्रजङ्घकम्पनसहितयोः प्रेषणम्, अथ तैः सह राक्षससेनानिर्गमनम्, अथ वानरराक्षससेनयोस्तुमुलं युद्धं च ।

७६ अथ कम्पनप्रजङ्घयोरङ्गदेन प्रमापणम्, शोणिताक्षस्य द्विविदेन, मैन्देन यूपाक्षस्य च प्रध्वंसनम्, अथाङ्गदमैन्दद्विविदानां जाम्बवत्सुषेणवेगदर्शिनां च कुम्भेन पराजितानां साह्यायागतेन सुग्रीवेण कुम्भस्य निस्तर्हणं च ।

७७ अथ निकुम्भस्य हनुमतश्चायोधनप्रवृत्तिम्, तत्र हनुमता निकुम्भस्य वधं चाह ।

७८ अथ रावणाज्ञया खरपुत्रो मकराक्षः ससैन्यो युद्धाय निरगच्छदिति कथा ।

७९ अथ मकराक्षः खरपुत्रः खरमारं मारितो रामेणेति कथा ।

८० अथ रावणप्रेरितो रावणिः कृताभिचारिकहोमः पुनरेत्य रामलक्ष्मणौ सर्वांश्च वानरानाकाशेऽन्तर्हितः शरशतैरर्दयति स्म, ततश्च तद्दौष्ट्यमसहमानेन लक्ष्मणेनाखिलराक्षसविध्वंसनाय ब्रह्मास्त्रप्रयोगमनुजिज्ञासितो रामो निरपराधनिखिलराक्षससंहारादनुजं निवर्त्य रावणिमारणोपायमेवाचिन्तयदित्याह ।

८१ अथातिकुपितरामलक्ष्मणभयात्त्यक्तयुक्तयुद्धरङ्गेण पुरीं प्रविश्य निकुम्भिलायां दुर्जया[illegible] होतुकामेन तावत्पर्यन्तं रामलक्ष्मणयोर्युद्धोद्योगं मन्दीकर्तुं काञ्चनमायामारिप्समाणेन रामलक्ष्मणयो[illegible]-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

कुपितत्वेन दुरासदत्वात् सीतास्वरूपज्ञस्यान्यस्याभावाद्धनुमते मायां दर्शयितुं पश्चिमद्वारेण निर्गतेनेन्द्रजिता तत्र हनुमदादिवानरयूथपसन्निधौ मायासीता छिद्यतेति कथा ।

८२ अथेन्द्रजित्कोलाहलदर्शनात् प्रतिनिवृत्तान् यूथपान् समाश्वास्य तैः सह पुना राक्षससेनां विद्राव्य सीताविपत्तिमिन्द्रजिता कृतां रामाय विज्ञापयितुं ससैन्येन हनुमता प्रास्थीयतेति वर्णनम् ।

८३ अथ हनुमन्मुखादिन्द्रजिता कृतां सीताविपत्तिं श्रुत्वा महान्तं शोकमापन्नस्य रामस्य लक्ष्मणेनाश्वासनम् ।

८४ अथागतेन विभीषणेन रामस्येन्द्रजित्प्रयुक्तमोहनव्यापारतत्त्वमुपदिशता तद्वधाय लक्ष्मणप्रेषणप्रार्थनम् ।

८५ पुनः सम्यग्विभीषणवाक्यसमागतधैर्येण रामेण विभीषणहनुमदङ्गदजाम्बवत्प्रमुखरक्षोवलीमुखसंवृतो लक्ष्मण इन्द्रजिद्वधाय निकुम्भिलां प्राप्येत्याह ।

८६ अथ विभीषणसन्दर्शितां निकुम्भिलायाः परितः स्थापितां राक्षससेनां लक्ष्मणहनुमदादिभिर्विध्वंसितां श्रुत्वा बहिर्निर्गतेन असमाप्ताभिचारिकहोमकर्मणेन्द्रजिता सह हनुमतो युद्धप्रवृत्तिः, तदा विभीषणेन लक्ष्मणं प्रतीन्द्रजितो विध्वंसनाय विज्ञापनं च ।

८७ अथ विभीषणेन इन्द्रजिद्धोमस्थानभूतं निकुम्भिलास्थन्यग्रोधमूलसमीपं लक्ष्मणं नीतवता लक्ष्म-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

णाय तत्रत्यमिन्द्रजिद्धोमस्थानं प्रदर्श्य तत्प्रवेशात् पूर्वमेव स जेतव्य इति विज्ञापनम् , तदा स्वमर्मोद्घाटनं कुर्वाणं विभीषणं दृष्ट्वातिकुपितेनेन्द्रजिता विभीषणनिन्दनम् , तस्य विभीषणेन प्रयुक्तिकथनञ्च ।

८८ अथ लक्ष्मणेन्द्रजितोरन्योन्यवीरवादपूर्वकं केवलशरैः परस्परं विव्यधनं विवृतम् ।

८९ अथ लक्ष्मणेन्द्रजितोः परस्परं शरसहस्रविध्वस्तकवचयोर्महान् सम्प्रहारप्रकाशः ।

९० अथ विभीषणेन वानराणामिन्द्रजित्परिवारहननाय प्रोत्साहनम्, ततो लक्ष्मणेन्द्रजितोर्महति चलति सम्प्रहारे लक्ष्मणेनेन्द्रजित्सारथिविध्वंसनम् , तदा प्रमाथिशरभरभसगन्धमादनैरिन्द्रजिद्रथाश्वानां रथेन सह विध्वंसनं च ।

९१ अथेन्द्रजिता अन्यं रथमास्थितेन सह तदीयरथन्तरानयनलाघवातिशयविस्मितानां लक्ष्मणविभीषणादीनां पुनर्युद्धे लक्ष्मणेनेन्द्रजित्सारथिहननम्, विभीषणेन तद्रथहयविध्वंसनम्, ततः पदातिना तेन विभीषणाय प्रयुक्तयोः शक्तिशरवरयोर्लक्ष्मणेन विदलनम्, अथोभयोर्वारुणाद्यस्त्रप्रयोगवारणकुशलविस्मापिताखिलवैमानिकयोर्महति संप्रहारे महानुभावेन रामानुजेन दिव्यबाणेन तत्तादृशस्येन्द्रजितः प्रमापणं च ।

९२ अथ विभीषणहनुमज्जाम्बवदादिभिः सह लक्ष्मणस्य श्रीरामसमीपागमनाभिवादनेन्द्रजिद्वधकथनानि, ततः परमानन्दभरितेन श्रीरामेण लक्ष्मणं गाढं निपीड्य मूर्ध्न्युपाघ्राय पुनःपुनः सप्रेमवीक्षणपूर्वकं तस्य विभीषणादीनां च श्लाघनम् , ततो रामनियुक्तसुषेणचिकित्साविशेषगतवेदनैर्लक्ष्मणादिभिः सर्वैरिष्टजनैः सह श्रीरामस्य प्रहर्षलाभश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　विषयाः ।

९३ श्रुतेन्द्रजिद्वधेन रावणेन बहुशो विलापानन्तरं सर्वराक्षसनिधनमूलकारणमियमेव किल अत इमां वधिष्यामीति सीतावधाय सासिनाशोकवनिकागमनम्, तावत्सुपार्श्वाख्यमन्त्रिप्रवरसूक्त्युपशान्तकोपानलेन पुनर्गृहं प्रत्यागमनं चाचख्यौ ।

९४ अथ रावणप्रेषितस्य एकोनत्रिंशल्लक्षाधिकसप्तकोटिसङ्ख्यासङ्ख्यातरथविंशतिसहस्राधिकद्वादशलक्षोत्तरत्रयोदशकोटिसङ्ख्यासङ्ख्यातकुञ्जरषष्टिसहस्राधिकविंशतिलक्षोत्तरदशकोटिसङ्ख्यासङ्ख्यातसारोहतुरगाशीतिलक्षोत्तरपञ्चचत्वारिंशत्कोट्यधिकशतकोटिसंङ्ख्यासङ्ख्यातपदातियुक्तस्य महतो मूलबलस्य रासेणाप्रतिमशौर्यारामेण कृतं विध्वंसनं विवृतवान् ।

९५ अथ रावणापनयमूलकं सर्वराक्षससङ्घविनाशमधिकृत्य राक्षसीभिर्व्यलप्यतेत्यमुमर्थमाख्यापितवान् ।

९६ अथ कर्णारुन्तुदराक्षसीजनविलापसन्धुक्षितकोपानलेन महाबलेन रावणेन महोदरमहापार्श्वविरूपाक्षाख्यमन्त्रित्रयसहितेन ससैन्येन युद्धायोत्तरद्वारतो निर्गमनम्, तदा रावणनिधनशंसिनामुत्पातानामाविर्भावः, ततस्तानचिन्त्य युद्धभूमिं गतेन रावणेन हरिसैन्यकदनं च ।

९७ अथ रावणमन्त्रिविरूपाक्षो विक्षोभितवानरबलो महाबलेन विपुलग्रीवेण सुग्रीवेण वैवस्वतनगरवास्तव्यतां नीत इत्याह ।

९८ अथ रावणमन्त्री महोदरस्तेनैव वानरराजेन महासिनाधिगलं कदलीलावं व्यलावीति कथा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

९९ अथ रावणमन्त्री महापार्श्वो रुचिराङ्गदेनाङ्गदेन मुष्टिना निष्पिष्टदेहो नष्टप्राणोऽभवदिति कथा ।

१०० अथ रामरावणयोः प्रथमतः साधारणैः शरैरन्योन्ययुद्धकरणम्, ततोऽस्त्रैर्युद्धे रावणप्रयुक्तमासुरास्त्रं रामेण पावकास्त्रेण न्यहन्यतेत्याह ।

१०१ अथ रामेण रावणास्त्राणि निहत्य किञ्चिद्विश्राम्यति लक्ष्मणेन विभीषणसहितेन साश्वं ससारथिं रावणरथं विध्वंसितवता तत्कोपेन विभीषणोपरि रावणप्रयुक्तायाः शक्तेश्च च्छेदनम्, अथातिकुपितेन रावणेन मयनिर्मिताममोघां शक्तिं विभीषणाय प्रयोक्ष्यमाणं दृष्ट्वा लक्ष्मणेन बाणवर्षै रावणस्तम्भीकरणम्, तत्कोपेन रावणप्रयुक्तया तयैव शक्त्याभिहतस्य लक्ष्मणस्य पतनम्, तदानीमतिधैर्येण रामेण हनुमदादीन् लक्ष्मणरक्षणायादिश्यामितैर्बाणवर्षैर्दशकण्ठविद्रावणं च ।

१०२ अथ रामशोकप्रलापं लक्ष्मणजीवल्लक्षणवचनैः संशमयता सुषेणेन प्रहितस्य हनुमतः ओषाधिपर्वतानयनम्, सुषेणे नौषध्या लक्ष्मणस्य नस्यप्रदानम्, तेन विशल्यतया लक्ष्मणमुत्थितं दृष्टवतो रामस्यनन्दावाप्तिश्च ।

१०३ अथ देवेन्द्रप्रेषितं दिव्यं रथमारूढस्य रामस्य पूर्वं लक्ष्मणविभीषणमथितं रथं विसृज्यान्यं रथमारूढस्य रावणस्य च युद्धप्रवृत्तिः, तदा महत्यस्त्रसंयुगे रावणेन मातलिमश्वांश्च ताडितान् दृष्ट्वा रामस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

महाक्रोधागमश्च, रामो रावणेन प्रयुक्तं वज्रसारं महच्छूलमिन्द्रप्रेषितया मातलिदत्तया शक्त्या विनिर्भिद्य रावणरथाश्वान् रावणं च बाणगणैर्बिभेदेति कथा ।

१०४ अथ पुना रावणेनानेकसहस्रबाणै रामार्दनम्, रामेण च तावता शरजालेन रावणशरान् वारितवता रावणं प्रति निर्भर्त्सननिन्दनपूर्वकं बहुभिर्बाणवर्षैस्तत्ताडनम्, तेन रावणविक्लवं निरीक्ष्य सूतेन तदीयरथस्यान्यत्रापनयनं चाह ।

१०५ अथ निवृत्तचित्तमोहेन रावणेन रथापनयनपरिकुपितेन सूतनिर्भर्त्सनम्, ततस्तेन रावणसान्त्व-पूर्वकं पुनस्तन्नियोगेन रथस्य युद्धभूमावानयनं च ।

१०६ अथ रावणरथागमलब्धावसरेणागस्त्येन महर्षिणोपदिष्टेनादित्यहृदयाख्येन स्तोत्रविशेषण स्तुवन्तं रामं प्रति सहस्रांशोः रावणवधानुग्रहवर्णनम् ।

१०७ रावणसारथिना रणभुवि रथानयनम्, रामरथस्य च शत्रुरथं प्रति मातलिना प्रतिनयनम्, ततः पुनर्यथापुरं रामरावणयोः सम्प्रहारः, तदानीं रावणमरणसूचकानां दारुणानामुत्पातानां रामविजयसू-चकानां सौम्यशुभनिमित्तानां चाविर्भावः, तादृशनिमित्तदर्शनेन रघुनन्दनस्य परमानन्दलाभश्च ।

१०८ अथ पुना रामरावणयोर्महाक्रूरयुद्धप्रवृत्तिः, तदा रावणेन रामरथध्वजच्छेदाय शरप्रयोगः, तस्य शरस्य रामरथदार्ढ्यप्रतिहतस्य व्यर्थतया भूमौ पतनम्, अथ रामेण रावणरथध्वजच्छेदनम्, अथान्योन्यं हयसारथ्यादीन् निघ्नतोस्तयोः पुनः समरश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

१०९ अथ पुनर्महति सम्प्रहारे महानुभावेन रामेण रावणशिरांसि पुनःपुनरुदयमानान्येकोत्तर-शतवारं छिन्नानीति कथा ।

११० अथ मातलिस्मारितेन रघुवीरेणागस्त्यदत्तस्य माहेन्द्रस्यात्मभूनिर्मितस्य दिव्यस्य बाणवरस्य ब्रह्मास्त्रमन्त्राभिमन्त्रितस्य रावणं प्रति प्रक्षेपणम्, ततस्तेन बाणवरेण दशवदनहृदयं प्रविष्टेन गृहीततदीयपञ्चप्राणेन तच्छरीररक्तराञ्जितेन पुनः श्रीरामतूणीरप्रवेशः, ततः सर्वैरपि देवैर्महानन्दभरितैः श्रीरामस्तवनम्, दिव्यपुष्पवृष्टिः, सुग्रीवादीनां महानन्दभरितानां श्रीरामस्तवनादिकं च ।

१११ अथ भ्रातृवधदर्शनेन विभीषणस्य हठादापतितः शोकविलापः, रामेण तच्छमनं च ।

११२ अथ लङ्काया उत्तरद्वारान्निर्गत्य युद्धभूमौ निहतं पतिं रावणं पश्यन्तीनां रावणपत्नीनां विलापप्रकारं प्राचीकशत् ।

११३ अथ रावणप्रधानमहिष्या मन्दोदर्याः प्रलापम्, रामनियुक्तेन विभीषणेन रावणसंस्कारं चाभ्यधत्त ।

११४ अथ श्रीरामनियुक्तेन लक्ष्मणेन लङ्कायां रावणसिंहासने विभीषणाभिषेचनम्, अथा-भिषिक्तेन विभीषणेनानुरञ्जितप्रकृतिकेन पुना रामसमीपागमनम्, ततो हनुमन्तं प्रति श्रीरामेण सीतायै स्वविजयकथनाय तत्सन्देशाहरणाय नियोजनं च जगाद ।

११५ अथ हनुमता लङ्कां प्रविष्टेन सीतायै श्रीरामस्य रावणविजयवृत्तान्तनिवेदनम्, तच्छ्रुत्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

महानन्दभरितया सीतया हनुमच्छ्लाघनम्, पुनर्हनुमता सीताक्षमावचनसंशमितराक्षसीवधोद्योगन श्रीराम-दिदृक्षाश्चितं सीतासन्देशं गृहीतवता श्रीरामसमीपागमनं चाकथयत् ।

११६ अथ श्रीरामनियुक्तेन विभीषणेन शिरःस्नानदिव्यालङ्कारादियुक्तायाः सीतायाः श्रीराम-समीपानयनम्, तत्र सीतया सहर्षविस्मयस्नेहभरितहृदयया श्रीरामवदनसन्दर्शनं चाचख्यौ ।

११७ अथ परगृहे चिरवासेन समुपनतं देव्या लोकापवादं तदग्निप्रवेशनेन परिजिहीर्षता अत एवारो-पिताभूतपूर्वरोषेण रघुवीरेण सीतां प्रति परुषवचनं च प्रादर्शयत् ।

११८ अथ रामपरुषोक्तीनां प्रत्युत्तरं दत्तवत्या भगवत्याः सीतायाः श्रीरामप्रत्ययार्थम-ग्निप्रवेशं न्यवृणुत ।

११९ अथ ब्रह्मादीनां श्रीरामसन्निधौ विमानैरागमनम्, आगतैस्तैः सामान्येन श्रीरामस्तवनम्, अथ चतुर्मुखेन विस्तरेण श्रीरामस्तवनं च ।

१२० अथाग्निपुरुषेण चितामध्यादुत्थितेन सीताचारित्रश्लाघनपूर्वकं रामाय सीतासमर्पणम्, श्रीरामेण च सीताचारित्रप्रशंसापूर्वकं तस्याः स्वीकरणम्, तेन निरतिशयानन्दावाप्तिं चाकथयत् ।

१२१ अथ महेश्वरेण रावणवधश्लाघनपूर्वकं चिरकालं कोसलराज्याङ्गीकारभरताश्वासनाश्वमेधादिधर्मा-नुष्ठानप्रार्थनापूर्वकं च तदानीं देवैः सह विमानेनागतस्य दिव्यदेहयुक्तस्य पितुर्दशरथस्याङ्गुल्या निर्देश-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

पूर्वकमभिवादननियोजनम्, ततो रामेण ससीतेन सलक्ष्मणेनाभिवान्दितस्य दशरथस्य श्रीरामलक्ष्मणसीतानां प्रत्येकं स्वस्वकर्मश्लाघनपूर्वकं हितमनुशास्य विमानेनेन्द्रलोकगमनं च ।

१२२ अथ महेन्द्रप्रसादात् सुप्तोत्थानन्यायेन युद्धमृतानां सर्ववानराणामुत्थापनम्, सर्वदेवताप्रस्थापनं चाह ।

१२३ अथ विभीषणेन श्रीरामं प्रति मङ्गलस्नानप्रार्थनां रामेण भरतं विना किमप्यहं नाङ्गीकरोमीति वचनम्, ततः पुनर्द्वित्रिदिनपर्यन्तं लङ्कायामवस्थितिप्रार्थनम्, तस्यापि रामेण भरतदिदृक्षात्वरया निवर्तनम्, ततो रामाज्ञया विभीषणेन पुष्पकानयनं चाकथयत् ।

१२४ अथ रामाज्ञप्तेन विभीषणेन सर्ववानरबहुमानम्, ततः स्वेन सहागन्तुमिच्छद्भिः सुग्रीवादिभिर्वानरवृन्दैः ससचिवेन विभीषणेन च सहालङ्कारभूतजनकराजतनयेन सानुजेन श्रीरामचन्द्रेण पुष्पकमधिरूढेनायोध्यां प्रति गमनमुपक्रान्तमित्यदर्शयत् ।

१२५ अथ पुष्पकस्थेन श्रीरामेण सीतायै लङ्कापुरप्रभृत्ययोध्यापुरपर्यन्तान् प्रदेशान् दर्शयता मध्ये किष्किन्धासमीपगमनसमये सीताप्रार्थनेन सुग्रीवादिवानरपत्नीरपि पुष्पकमारोपितवता यथागतं भरद्वाजाश्रमः सम्प्राप्त इत्यभ्यधत्त ।

१२६ अथ भरद्वाजाश्रमे भरद्वाजमुखादयोध्यास्थमातृभरतादिक्षेमवार्ताश्रवणम्, ततस्तेन महर्षिणा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

प्रार्थितस्य श्रीरामस्य तस्मिन् दिने तत्रावस्थानम्, ततो भरद्वाजेन स्वाश्रममारभ्यायोध्यापर्यन्तमार्गवर्ति-सर्वपादपानामकालफलमधुकुसुमादिविवृद्धिरूपवरदानं चाकथयत्।

१२७ अथ श्रीरामेण भरतं प्रति स्वागमनवृत्तान्तकथनाय हनुमत्प्रेषणम्, हनुमता नन्दिग्रामं गतेन भरताय रामागमनवृत्तान्तकथनम्, तच्छ्रवणेन भरतस्य महानन्दावाप्तिं चाह।

१२८ अथ भरतपृष्टेन हनुमता रामस्य चित्रकूटनिर्गमप्रभृति पुनर्भरद्वाजाश्रमागमनपर्यन्तवृत्तान्तकथ-नपूर्वकं श्वः पुष्ययोगेन रामं ससीतं लक्ष्मणादिपरिवारं द्रक्ष्यसीति कथनम्, तच्छ्रवणेन भरतस्य परि-पूर्णमनोरथत्वेन स्वात्मनि महानन्दावाप्तिं चाचख्यौ।

१२९ अथ भरताज्ञया निखिलनगरवीथीगोपुरवेश्माद्यलङ्करणपूर्वकं सर्वेषामन्तःपुरजनादीनां नटनर्त-कान्तानां राजपरिजनानां नागरिकाणां च श्रीरामसेवार्थं शत्रुघ्ननियुक्तानां नन्दिग्रामप्रवेशः, अथ सर्वैः साकं श्रीरामसिषेविषया भरतस्य प्रत्युद्यानम्, अथ भरतस्य श्रीरामसमागमः, अथ श्रीरामस्यातिप्रेम्णा-ङ्कारोपितभरतस्य पुष्पकविमानेन नन्दिग्रामस्थभरताश्रमप्रवेशः, अथ पुष्पकं धनदाय प्रतिप्रेपितवता श्रीरामेण भरताश्रमे वसिष्ठादिभिः सह यथोचितं पृथगासने समुपवेशनकथनञ्च।

१३० अथ तस्मिन् सदसि भरतेन चित्रकूटे पूर्वं स्वकृतप्रपत्तिसूचकाञ्जलिबन्धनपूर्वकं श्रीरामं प्रति राज्याभिषेकाङ्गीकरणप्रार्थनम्, ततः श्रीरामेण तदनुमोदनपूर्वकं विशोधितजटेन कृतमङ्गलस्नानेन तादृशै-र्भरतलक्ष्मणशत्रुघ्नैः सुग्रीवादिभिश्च सह दिव्यरथेनायोध्याप्रवेशः, तत्र महामाणिक्यमण्डपे दिव्यसिंहासने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

जाम्बवद्धनुमदादिसमानीतैर्निखिलनदीसमुद्रसम्बन्धिभिः समस्तमाङ्गलिकश्रुतिमन्त्रगणपठनसम्भृतवैभवैः रत्नकाञ्चनमयकलशसम्भृतैस्तीर्थोदकैः श्रीरामस्य वसिष्ठादिभिर्दिव्याभिषेकः, तत्र श्रीरामेण सर्वेषां विभीषणसुग्रीवाङ्गदहनुमदादीनां सम्माननम्, तेषां यथागतं स्वस्वनगरगमनम्, अथ भरतं यौवराज्येऽभिषेचितवतः श्रीरामस्य राज्यपरिपालनवैभवम्, श्रीरामायणपठनश्रवणादिफलं च विस्तरेण प्रत्यपादयत् ।

इति युद्धकाण्डविषयानुक्रमणिका समाप्ता ।



## अथोत्तरकाण्डविषयानुक्रमणिका ७.

१ अथ राक्षसवधानन्तरं प्राप्तराज्यस्य रामस्य समीपे रावणिवधजनितानन्दविकसितहृदयपुण्डरीकमुन्यागमनम्, सौमित्रिप्रशंसकमुनीन्प्रति रावणकुम्भकर्णाद्यतिक्रमेणेन्द्रजित्प्रशंसने रामप्रश्नः ।

२ अथ कुम्भसम्भवः शक्रजित्प्रभावं वक्तुमुद्युक्तः स्वशापात् पाण्डुरीभूतविग्रहां धृतदौर्हृदलक्षणां तृणबिन्दुतनयां पुलस्त्य उद्वाह्य तस्यां विश्रवसमजीजनदित्यवोचदित्याचष्ट ।

३ अथ विश्रवसो भरद्वाजसुतायां देववर्णिन्यां वैश्रवणोत्पत्तिः, पुनस्तस्य तपःसन्तुष्टेन पितामहेन लोकपालत्वनिध्यधिपतित्वरूपवरद्वयेन साकं पुष्पकप्रदानम्, ततः पित्रा निवेदितलङ्कानिवासश्च, तेनैव विमानेन पितुः समीपगमनं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

४ अथ श्रीराघवप्रश्नानुगुणं पद्मसम्भवनिर्मितसत्त्वानां राक्षसत्वनामकरणम्, तेषु हेतिप्रहेतिसम्भवः, हेतेर्विद्युत्केशजननम्, विद्युत्केशरताभिलाषिण्या सालकटङ्कटया त्यक्तशिशुरोदनजातघृणापूरितान्तःकरणयोर्गौरीशंकरयोः सान्निध्यम्, गौरीप्रीत्यै शङ्करेण सुकेशायाकाशपुरप्रदानम्, गौर्या राक्षसानां सद्योगर्भोत्पत्तिरूपमातृवयःसमानरूपपरिचयदानं च ।

५ अथ सुकेशभार्यायां देववत्यां माल्यवत्सुमालिमालिनामुद्भवः, तेषां तपसा सन्तुष्टेन ब्रह्मणा वरप्राप्तिः, विश्वकर्मनिर्मितलङ्कावासः, माल्यवतः सुन्दर्यां वज्रमुष्टिविरूपाक्षदुर्मुखसुप्तघ्नयज्ञकोपमत्तोन्मत्तानामनलायाश्च सम्भवः, सुमालेः केतुमत्यां प्रहस्ताकम्पनविकटकालिकामुखधूम्राक्षदण्डसुपार्श्वसंह्रादिप्रभसभासकर्णानां राकापुष्पोत्कटाकैकसीकुम्भीनसीनां चोत्पत्तिं मालेर्वसुदायामनलानिलहरसम्पातीनां विभीषणामात्यानामुद्भवं च प्राचीकशत् ।

६ अथ माल्यवदादीनां बाधामसहमानानां देवानां महादेवलब्धमन्त्राराधितत्रियुगलब्धामयानां जयाय तेषां निशिचराणां युद्धयात्राम्, ततो गरुडारूढस्य विष्णोरागमनम्, तैः सह युद्धं चाह ।

७ अथ राक्षसैरभिहन्यमानो विष्णुः शङ्खरवेण रक्षोगणान्विद्राव्य मालिसारथेः शिरश्छेदनपूर्वकं तुरगहननात् विरथीकृतेन मालिना गदयाभिहतस्य सुपर्णस्य पृष्ठे तिर्यगास्थितो हेतिराजेन तस्य शिरोऽच्छिनदिति प्राचीकशत् ।

८ अथ राक्षसनिःशेषीकरणाभिलाषेण वज्रहस्तानुजेन ध्वंसितं स्वबलं निरीक्ष्य माल्यवान् पराङ्मु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

खवधं माकार्षीरिदमयुक्तमित्युक्त्वा स्वकरशक्त्या स्वयमेवाभिहतः सम्मूर्छितः पुनर्विष्णुरथपक्षानिलविक्षोभितानीकः सुमालिना सह लङ्कां विहाय सपत्नीकः सपरिच्छदः पातालमगमदित्यकथयत् ।

९ अथ कदाचित्पातालान्निर्गत्य महीतले विचरता माल्यवता पुष्पकेण पितरं द्रष्टुमभियान्तं यक्षराजं वीक्ष्यायं प्रभावोऽस्य विश्रवस इति निर्धार्य प्रेषिता कैकसी विश्रवसः समीपमागत्य पादाङ्गुष्ठेन भूमिं लिखन्ती तेन 'का त्वं किमर्थमागतेति पृष्टा स्वाभिप्रायमनिवेदितवत्यपि पुत्राभिलाषिणीति विज्ञाता निजागमनसमयोचिताः पुत्रा उत्पद्येरन्निति तेनोक्ता पुनः प्रसादयन्ती कश्चिद्धर्मिष्ठोऽपि जायेतेत्यनुगृहीतोत्पातैः सह विंशतिभुजं दशग्रीवं कुम्भकर्णं शूर्पणखां धर्मिष्ठं विभीषणं चाजीजनदित्याचष्ट ।

१० अथात्युग्रतपसां दशग्रीवकुम्भकर्णविभीषणानां मध्ये दशमुखस्य शिरोहोमसंतुष्टेन ब्रह्मणा मानुषादृते सर्वावध्यत्वरूपवरप्रदानपूर्वकं छिन्नानां शिरसां पुनरुत्पत्तिरूपवरप्रदानम्, विभीषणस्य धर्मेऽचञ्चलबुद्धित्ववरदानं च, कुम्भकर्णानने सरस्वतीप्रवेशान्मोहितेन तेन निद्रावरणम्, तथैवानवरतनिद्रत्ववरप्रदानम्, तेषां श्लेष्मातकवननिवासश्च ।

११ अथ माल्यवता कुबेराध्युषितलङ्कापहरणाय बोधितेन दशकण्ठेन तदनङ्गीकरणम्, पुनः प्रहस्तेन बोधितेनाग्रजाय प्रहस्तप्रेषणम्, ततः प्रहस्तवाक्यश्रवणसमनन्तरं यक्षराजपितृसमीपगमनम्, पित्रनुज्ञया लङ्काविसर्जनपूर्वकं कैलासस्थानगमनम्, ततो दशग्रीवादीनां लङ्काप्रवेशं चाह ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः।  विषयाः ।

१२ अथ दशवदनस्य लङ्कायामाभिषेचनम्, शूर्पणखाविद्युज्जिह्वयोः परिणयः, ततो मृगयायै विपिनेऽटमानेन दशकण्ठेन सदुहितृकस्य मयस्य दर्शनम्, ततोऽन्योऽन्यवंशविचारपूर्वकमग्नेः पुरस्तान्मन्दोदरीपाणिग्रहणम्, कुम्भकर्णेन वैरोचनदौहित्र्या विद्युज्जिह्वायाः पाणिपीडनम्, विभीषणेन शैलूषस्य गन्धर्वराजस्य पुत्र्याः सरमायाः पाणिग्रहणम्, मन्दोदर्यां मेघनादजननं चाह ।

१३ अथ ब्रह्मशापान्निद्राविष्टस्य कुम्भकर्णस्याग्रजप्रेरितैः शिल्पिभिः शयनगृहनिर्माणम्, वरदानप्राप्तदशवदनकदनदूयमानात्रिभुवनदुःखशमनाय वैश्रवणेन स्वदूतमुखेन स्वस्य तपश्चरणकालसान्निहितगौरीनिरीक्षणदग्धेक्षणस्यात्युग्रतपसाराधिताच्छंकरात्पिङ्गलेक्षणत्वप्राप्तिः, तेन मैत्रीलाभनिदर्शनपूर्वकं दौर्जन्यं त्यक्त्वा लोकमित्रो भवेति प्रतिबोधितस्य दशमुखस्य त्रिलोकजैत्रयात्रामाचष्ट ।

१४ अथ महोदरप्रहस्तमारीचशुकसारणधूम्राक्षादिभिः संवृतस्य रजनीचरपतेः कैलासगमनम्, तत्र यक्षराक्षसबलयोरायोधनम्, तत्र सङ्कोचकण्टकेन मारीचताडनम्, पुनर्मारीचेन तोरणदण्डेन यक्षध्वंसनं चाह ।

१५ अथ रक्षःसङ्गनिर्जितयक्षौघवीक्षणातुलरोषेण धनाध्यक्षेण प्रेरितस्य मणिभद्रस्य दशवदनगदाप्रहारेण पार्श्वमौलित्वम्, पुनर्मारीचादीनां पलायनम्, ततो दशवदनस्य त्र्यम्बकसखेन सद्बुद्धिबोधनम्, तदश्रृण्वता दशाननेन गदाभिहतस्य कुबेरस्य पलायनं पुष्पकापहरणं च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः।　　　　　　　　　　　　　　　　　　　　　　　　　　　विषयाः।

१६ अथ दशवदनो धनदं निर्जित्य जयलक्षणं पुष्पकमारूढो मन्त्रिभिः सह कार्तिकेयोत्पत्तिस्थानमतिशोभायमानं शरवणमतीत्य किञ्चिद्दूरं गत्वा पुष्पकं विष्टब्धं वीक्ष्यावरुह्य मारीचसहायो नन्दिना क्रीडमानयोः शिवयोर्निवासभूतः पर्वतोऽयं देवैरपि दुरवगाह्य इति प्रतिषिद्धोऽपि द्वितीयशङ्करेणावस्थितेन नन्दिना परिहसितेन मद्रूपसदृशाकारैर्वानरैस्तव कुलनाशो भवितेति शप्तो निजभुजसञ्चालितकैलासपरिभ्रमणकातरागराजसुताश्लेषपरवशभूतेशपादाङ्गुष्ठविन्यासविमृदितभुजाविंशतिः सामगानपूर्वकं विविधस्तुतिजालैः शङ्करं संतोषयित्वा तेनैव मोचितोऽसावस्मिन् निस्त्रिंशमादायाखिललोकरावकाक्रन्दनेन रावणाभिख्यां वहन् महीतले राज्ञां हिंसाया आजगामेत्याह।

१७ अथ रावणेन हिमवद्गिरिसानौ तपश्चरन्त्याः कस्याश्चिच्चीराजिनधारिण्या नामप्रश्नः, कुशध्वजस्य वेदाध्ययनकाले वचसो वेदमयबिन्दूत्पन्नत्वाद्वेदवतीसंज्ञालाभकथनम्, पुनस्तेन भार्यात्वप्रार्थनम्, तदलाभात्केशग्रहणम्, तया तद्गृहीतकेशच्छेदनम्, त्वद्वधार्थं पुनरुत्पत्स्य इति शापोत्सर्गपूर्वकमग्निप्रवेशश्च।

१८ अथ रावणेनोशीरदेशे सत्रं कुर्वतो मरुत्तस्य युद्धाह्वानम्, तद्यज्ञार्थमागतानामिन्द्रयमवरुणकुबेराणां मयूरवायसहंसकृकलासरूपप्राप्तिः, पुनरनेनाग्रजजयप्रशंसनम्, तच्छ्रुतवता मरुत्तेन परिहासकरणपूर्वकं युद्धाभिगमनम्, संवर्तमुनिना तन्निरोधनम्, जयोद्घोषणपूर्वकं रावणस्यान्यतो गमनम्, मयूरवायसहंसकृकलासानामिन्द्रयमवरुणकुबेरैर्वरप्रदानं चाह।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयः ।

१९ अथ रावणस्य भूमण्डलभ्रमणम्, तत्र स्थितराज्ञां निर्भर्त्सनपूर्वकमयोध्याधिपस्यानरण्यस्य स्ववंश्येनास्य वधाय शापप्राप्तिं च प्राचीकशत् ।

२० अथ रावणेन भूमिगतसकलमानवहिंसामसहमानस्य नारदस्यागमनम्, पुनरनेन यमजयाय रावणप्रेषणम्, तद्वीक्षणाय नारदस्य यमलोकगमनं चाचष्ट ।

२१ अथ पूर्वमागतेन नारदेन यमनिकटे रावणागमननिवेदनम्, तत्काल एव पुष्पकविमानदर्शनम्, आगतेन रावणेन नारकीबाधाविमोचनम्, तद्दर्शनकुपितान्तकभृत्याहिंसितस्वसैन्यवीक्षणजनितरोषस्य रावणस्य यमकिङ्करैर्युद्धारम्भः, तैर्विध्वंसितात् पुष्पकादभिहतस्य रावणस्य मूर्च्छितस्य पतनम्, पुनरुत्थितेनानेन पाशुपतास्त्रमोक्षणम्, तेन यमकिङ्करदहनं चाह ।

२२ अथ रावणबाधितस्वकिङ्करार्तस्वररक्षोजयध्वनिं श्रुतवतो यमस्य युद्धाभिगमनम्, सूतानीतस्यातिभीषणज्वालामालापरीतस्य पार्श्वयोर्मृत्युकालाभ्यामधिष्ठितस्य रुधिरवर्णवाजियुतस्य पाशतोमरशक्तिप्रभृत्यायुधस्तोमपरिवृतस्य रथस्यारोहणम्, मृत्युना रावणवधाय प्रार्थनम्, तन्निरोधनपूर्वकं यमेन सर्वजगत्संवर्तकृत्कालदण्डतोलनम्, तत्समरचकितैरमरैः सह परमेष्ठ्यागमनम्, यमसमीपे ब्रह्मणामोघस्य कालदण्डस्योपसंहारप्रार्थनपूर्वकं रावणस्य निजवरप्रदानप्रकटनम्, यमस्यान्तर्धानम्, रावणस्य जयघोषेण यमलोकात् प्रतिनिवर्तनम् चाह ।

२३ अथ यमलोकादागतेन रावणेन मारीचादीनां समागमः, पुनरनेन रसातलगमनसमये पयोनिधि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

दर्शनम्, भोगवत्यां मणिमतीनगरस्थनिवातकवचैः सहास्य संवत्सरान्तमायोधनम्, ततः पितामहनियोगेन तैः सह मैत्री, अश्मनगरे कालकेयहननम्, तत्रैव शूर्पणख्या भर्तुर्विद्युज्जिह्वस्य शिरश्छेदनम्, ततः सलिलेन्द्रनीलदर्शनम्, तत्र क्षीरोदनिदानम्, क्षीरं स्रवन्त्याः पशुपतिवृषभमातुश्चन्द्रजनयित्र्याः फेनपानां जीवातोर्वराण्याः प्रदक्षिणपूर्वकमनवरतनिष्यन्दमानामन्दतोयधाराकीर्णपरिसरपाण्डुराभ्रसदृशप्राचेतसालयनिरीक्षणासहिष्णुदशवदनशरार्द्यमानबलाध्यक्षवीक्षणजनितक्रोधानां वरुणतनयानां युद्धाभिगमनम्, तैर्दशमुखस्य युद्धाविमुखीकरणम्, पुनर्महोदरेण तेषां रथभञ्जनम्, ततो रावणेन तेषां पराभवः, पुनर्वरुणान्वेषणम्, प्रहसेन वरुणमन्त्रिणा वरुणस्य ब्रह्मलोकयात्राकथनम्, अस्य जयघोषेण प्रतिनिवर्तनं चाह ।

२४ अथ रावणेन लङ्कागमनवेलायां पथि देवगन्धर्वनागयक्षसिद्धनरेन्द्रकन्यापहरणम्, तासां स्वजनविश्लेषदुःखवशान्निरर्गलनिर्गताश्रुपरिषिच्यमानात्पुष्पकात्ताभिर्लङ्काप्रवेशसमये शुभसूचकब्राह्मण्योक्त्या सह भूमौ पतितायाः स्वसुः शूर्पणख्या आश्वासनपूर्वकं खरदूषणत्रिशिरःप्रभृतीनां चतुर्दशसहस्राणां राक्षसानां जनस्थानप्रेषणम्, तत्र खरेण राज्यपरिपालनं चाह ।

२५ अथ रावणस्य निकुम्भिलागमनम्, तत्र प्रवर्तितयागदीक्षितस्य कृष्णाजिनधरस्य मौनव्रतस्य स्वसुतस्य निरीक्षणम्, किमेतदिति प्रश्नः, शुक्रेण माहेश्वरयागकथनम्, तल्लब्धस्यन्दनशत्रुमोहिनीमायेषुधिबाणचापास्त्रलाभनिवेदनम्, ततो भ्रात्रा पुत्रेण च सह स्वभवनगमनम्, पुष्पकात्तासामपहृतानार्-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

वतरणम्, विभीषणेन भ्रातुर्गर्हणम्, पुनरिन्द्रं जेतुं सपुत्रस्य सकुम्भकर्णस्य सहस्राक्षौहिणीसैन्यपरीतस्य प्रस्थितस्यास्य मध्येमार्गं स्वयशसा सह स्वसारं कुम्भीनसीमपहृतवतो मधुनाम्नोऽसुरस्य वधार्थं मधुपुरगमनम्, तत्र तस्याऽलाभेन तदन्वेषणम्, ततः पादपतितायै भर्तृभिक्षार्थिन्यै कुम्भीनस्यै अभयप्रदानम्, तच्छ्रुत्वागतेन मधुनेन्द्रजयाय प्रस्थानम्, रात्रौ कैलासे सेनानिवेशं चाह ।

२६ अथ पुष्पितानेकानोकहजालमण्डितगन्धर्वकृतरमणीयगानशोभितपरिसरे कैलासे चन्द्रोदयदर्शनावशेन्द्रियरावणस्य सम्भोगाभिलाषसमयसमागताया रम्भाया बलात्कारम्, तदाकर्णनकुपितनलकूबरशापम्, ततःप्रभृत्यकामयानाबलात्कारानिराकरणं चाह ।

२७ अथ रावणस्येन्द्रलोकगमनमागतं रिपुं श्रुत्वा महेन्द्रेण युद्धसहायार्थं विष्णुप्रार्थनम्, कालान्तरे तस्य मयैव मरणं भविष्यति त्वमेव युद्धयस्वेति तेन नियोगम्, ततो देवराक्षसबलयोः संकुलयुद्धमारीचप्रहस्तमहापार्श्वमहोदराकम्पननिकुम्भशुकसारणसंह्रादधूमकेतुमहादंष्ट्रघटोदरजम्बुमालिमहाह्रादविरूपाक्षसूर्यशत्रुमहाकायातिकायदेवान्तकनरान्तकसुप्तघ्नयज्ञकोपदुर्मुखदूषणत्रिशिरःखरप्रभृतिभिः सह युद्धयमाने दशग्रीवे सावित्रेण वसुना सुमालिनो वधमभ्याचष्ट ।

२८ अथ सावित्रगदाभस्मीकृतसुमालिवीक्षणजातामर्षस्य मेघनादस्य जयन्तेन साकं द्वन्द्वयुद्धम्, ततो मातामहेन जयन्तहरणम्, रुद्रैः कुम्भकर्णशरीरदलनम्, रावणेन्द्रयोः परस्परं हेतिभिः प्रहारमप्याह ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

२९ अथ रावणबलस्य दशांशावशेषितत्वम्, ततो देवसेनया रावणाक्रमणम्, तद्वीक्षणजनितामर्षेण रावणिनेन्द्रग्रहणं सर्वेषां लङ्कागमनं च ।

३० अथ ब्रह्मणो लङ्कागमनमिन्द्रविमोचननैमित्तिकमिन्द्रजितो माहेश्वरयोगे निर्वर्तितेऽमरत्वम्, यागासमाप्तौ तत्क्षणमरणमाप्नुयामिति वरप्रार्थनम्, तथैव भवत्विति ब्रह्मणाङ्गीकरणपूर्वकमिन्द्रविमोचनम्, त्रिदिवगमनाशक्तस्येन्द्रस्य विधात्राहल्याबलात्कारजनितमुनिशापनिवर्तनहेतुभूतवैष्णवयागकरणबोधनम्, निर्वर्तितवैष्णवयज्ञेन वज्रिणा त्रिदिवाक्रमणं चोक्तवतागस्त्येन राघवप्रशंसनम् ।

३१ अथ पृष्टेनागस्त्येन रावणपराजयकथनमारभमाणेन रावणस्य माहिष्मतीपुरगमनम्, तत्र वसुरेतःपुत्रस्यार्जुनस्य जलक्रीडागमनश्रवणान्नर्मदागमनम्, तत्र सैकतवेदिकायां सुवर्णलिङ्गार्चनं च ।

३२ अथ कार्तवीर्यार्जुनभुजसेतुपूरितजलप्रवाहसम्प्लावितार्धनिर्वर्तितमहादेवपूजोपकरणस्य मन्त्रिभ्यां शुकसारणाभ्यां विज्ञातवृत्तान्तस्य रावणस्य कार्तवीर्येण बन्धनम्, माहिष्मतीनगरप्रवेशश्च ।

३३ अथार्जुनबद्धं रावणं विज्ञाय पुलस्त्येन विमोचनम्, तयोरग्निसाक्षिकं सख्यकरणं च ।

३४ अथ युयुत्सया रावणस्य किष्किन्धायां सन्ध्यार्थं वालिनो दक्षिणसमुद्रगमनं श्रुत्वा तत्र गमनम्, तत्रास्पष्टपदविन्यासं वालिनं ग्रहीतुमुद्युक्तस्यास्य वालिना कक्षपुटे ग्रहणम्, पश्चात्पश्चिमसमुद्रयानम्, तत उत्तराब्धिगमनम्, पूर्वसमुद्रे तेनैव सह विगाह्य सन्ध्यामुपास्य किष्किन्धोपवनसमिनि प्रक्षेपणम्, ततः कुतः किमर्थमिति च प्रश्नानन्तरमुभयोर्मैत्री, किष्किन्धायामेकमासावधिवासश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

३५ अथ श्रीरामेणातिबलशालिनो हनुमतः साचिव्ये सत्यपि सुग्रीवविप्रवासकारणप्रश्नः, पुनः कुम्भसम्भवेन केसरिणः क्षेत्रेऽञ्जनायां जगत्प्राणेनास्य जननम्, क्षुधितेन शिशुना फलबुद्ध्योदितस्यादित्यस्य जिघृक्षा, सूर्यबिम्बसमीपे सूर्यं ग्रहीतुमागतस्य विधुन्तुदस्य ग्रहणोद्यमनम्, तस्य रोदनमाभिज्ञायेन्द्रागमनमिन्द्रवाहनस्यैरावतस्यापि जिघृक्षां वीक्ष्य वज्रिणा कुलिशेन शिशुहननम्, ततो भगवतो वायोर्जगतां प्राणैः सह शिशुं हृत्वा उदयगुहाप्रवेशे जगतो निश्चेष्टाव्यापारभीतैरमरैः सह सर्वभूतैः प्रार्थितस्य पितामहस्यागमनम्, गुहायां वायुना नीतस्य शिशोर्वीक्षणञ्च ।

३६ अथ मातरिश्वना पादावेशितस्य शिशोर्ब्रह्मणो हस्तस्पर्शेनोज्जीवनम्, ततः सर्वदिक्पालकैः स्वस्वास्त्रैरवध्यत्वम्, आदित्येन स्वतेजसः शततमांशदानपूर्वकं स्वस्मिन्विद्याभ्यासयोग्यतायै वरप्रदानम्, विश्वकर्मणा स्वसृष्टायुधैरवध्यत्वम्, ब्रह्मास्त्रपाशुपतास्त्रैरप्यवध्यत्ववरप्रदानम्, तेषामन्तर्धानम्, वज्रप्रहारेणास्य हनुमत्संज्ञालाभः, पुनरस्य ऋष्याश्रमध्वंसनजनितऋषिशापेन स्वबलाविस्मरणम्, स्तोत्रेण स्वबलस्फुरणानुग्रहप्रसङ्गः, पुनरनेन हनुमता सूर्योन्मुखेन पृष्ठंगमेन ससूत्रवृत्त्यर्थपदानां नवव्याकरणानामध्ययनं चोक्तवतागस्त्येन गमनानुज्ञायाचनम्, दाशरथिना यज्ञायागमनप्रार्थनं च ।

३७ अथ प्रभाते बन्दिभिर्मागधैर्वैतालिकैर्विरचितस्तोत्रस्य श्रीरामस्य शयनादुत्थानम्, ततो निर्वर्तितनित्यकृत्यस्य सभाप्रवेशः, भ्रातृभिः सुग्रीवविभीषणादिभिः कथालापश्च ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।　　विषयाः ।

३८ अथ रामेण भरतेन सार्धं मिथिलायै जनकप्रेषणम् , लक्ष्मणेन सह युधाजितो राजग्रहाय प्रेषणम् , ततः सख्युः प्रतर्दनस्य काश्यै प्रेषणं च ।

३९ अथ राज्ञां स्वपुरगमनम् , भरतलक्ष्मणशत्रुघ्नैस्तद्दत्तसम्मानद्रव्यानयनम् , तद्द्रव्याणां सुग्रीवविभीषणयोः समर्पणम् , अङ्गदहनुमतोः प्रशंसापूर्वकं सुग्रीवनिवेदनम् , तयोः स्वाभरणान्यवमुच्यार्पणम्, नीलनलकेसरिकुमुदगन्धमादनसुषेणपनसमैन्दद्विविदजाम्बवद्गवाक्षविनतधूम्रप्रजङ्घसन्नाददरीमुखादीनां प्रशंसापूर्वकं वस्त्राभरणकनकादिभिः सम्मानम् , तैः सह बहुकालयापनं च ।

४० अथ सुग्रीवादीनां किष्किन्धायै प्रेषणम् , हनुमद्भ्योऽभिमतवरप्रदानम् , लङ्कायै विभीषणप्रेषणम् , हनुमते हारप्रदानम् , ततस्तेषां रामवियोगजनितदुःखपूरितनेत्राणां प्रयाणप्रशंसनं च ।

४१ अथापराह्णे धनदप्रेषितपुष्पकागमनम् , पुष्पकविमानेन रामवहनाय प्रार्थनम् , पुना रामेण स्वस्मरणकालसान्निध्यनियोजनपूर्वकं कुबेरं प्रति प्रेषणम् , अमानुषविमानकृतप्रार्थनाविलक्षेण भरतेन रामराज्यप्रजानन्दाविषयप्रशंसनं च ।

४२ अथ कदाचिच्चम्पकाशोकपुन्नागपनसपाटलिलोध्रकोविदाररसालतालहिन्तालतमालकुरकबमरुबकातिन्दुकाद्यनोकहजालमन्थिते पद्मोत्पलकुवलयकुमुदकह्लारनिवहनिबिडितवापीकूपोपकण्ठे धिक्कृतनन्दनचैत्ररथरामणीयके मल्लिकामालतीकुसुमसुरभिगन्धवहाविजिते प्रमदावने जनकतनयया रममाणेन रामेण

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

पुत्रलाभसूचकदौर्हृदसमयेऽस्मिन् तव किमभिलषितमिति पृष्टया तया मुनीनामाश्रमावलोकनापेक्षाकथनं तथैव श्वो भवत्विति रामेण स्वीकरणञ्च।

४३ अथ विजयमधुमत्तकाश्यपपिङ्गलकुटसुराजकालियभद्रदन्तवक्त्रसुमागधादिपरिहासकथावर्णनसमये रामेण पौरापवादः, पुरे यः कश्चिदस्ति वा नेति वेति पृष्टेन भद्रनाम्ना चारेण सीताविषयकापवादकथनम्, पुनः सत्यमिति सभ्यानामनुवदनं च।

४४ अथानीतानां भ्रातॄणामाश्लेषपूर्वकं रामेण युष्मत्सहायसम्पत्त्या राज्यं परिपालयितास्मि। अद्य मया युष्मासु वक्तव्यमस्तीत्युक्तानां भरतलक्ष्मणशत्रुघ्नानां शङ्काकुलचित्ततावर्णनम्।

४५ अथ सीताया आत्मनश्च कुलप्रभाववर्णनम्, लङ्कायां सीताया अग्निप्रवेशेन शुचित्वम्, सीताविसर्जनेनापि स्वस्य लोकाराधनवृत्तमनूद्य मुन्याश्रमालोकनाभिलाषव्याजेन सीतायास्तमसातीरे लक्ष्मणेन त्यागाय नियोजनम्, रामस्य स्ववचनप्रत्युत्तरदानाभावाय शपथाचरणञ्च।

४६ अथ प्रभाते लक्ष्मणेन सीतायामग्रजाज्ञानिवेदनपूर्वकं सुमन्त्राधिष्ठितरथारोहणम्, मार्गे दुर्निमित्तनिरीक्षणत्रस्तया सीतया लक्ष्मणे तन्निवेदनम्, रात्रौ गोमतीतीरे सर्वेषां वासः प्रभाते रथारोहणम्, मध्याह्ने गङ्गातीरे सौमित्रिकृतरोदनाय सीतया समाश्वासनम्, गङ्गातरणाय तरण्यारोहणं च।

४७ अथैतेषां गङ्गातरणम्, ततो लक्ष्मणस्य दुःखातिरेकदर्शनेन सीतायाः प्रश्नस्तेनाग्रजाभिप्रायनिवेदनपूर्वकमत्रैव वाल्मीक्याश्रमोपकण्ठे वसेति कृच्छ्रेण निवेदनम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

४८ अथ सौमित्रिवाक्यश्रवणमूर्च्छितायाः सीतायाः पतनम्, पुनर्लब्धसंज्ञाया रोदनम् , स्वस्या अरण्यवासप्रतिज्ञा, पुनर्लक्ष्मणसुमन्त्रयोर्दूरगमननिरीक्षणाद्विरचितप्रलापश्च ।

४९ अथ मुनिपुत्रैः सीतारोदनं श्रुतवता वाल्मीकिना स्वाश्रमायानीतायाः सीताया ऋषिपत्नीषु समर्पणम् ।

५० अथ सीतारामयोर्दुःखस्मरणसन्तप्तमानसस्य लक्ष्मणस्य दुःखनिवारणाय सुमन्त्रेण पूर्ववृत्तकथनोपक्रमवर्णनम् ।

५१ अथ सुमन्त्रः पुत्रोत्पत्तिं तेषामायुःपरिमाणं च पृच्छते दशरथाय, दुर्वाससात्रिपुत्रेण विष्णुना स्वचक्रेण भृगुपत्न्या हननम्, ततः कुपितस्य भृगोः शापः,तदनङ्गीकरणाद् भृगोरेव बाधा, पुनः पादपतितस्य तस्य शापाङ्गीकरणात्तव पुत्रत्वेनावतीर्णस्य विष्णोः पत्नीवियोगैकादशसहस्रहायनपरिमितायुःपरिमाणम् , कुशलवयोः राज्याभिषेकश्च ।

५२ अथ रात्र्यामनयोः केशिन्यां वासः, मध्याह्नेऽयोध्याप्रवेशः, लक्ष्मणेन दूयमानमानसाय रामाय नीतिनिदर्शनपूर्वकं समाश्वासनम् , ततो वीतदुःखस्य रामस्य सन्तुष्टिश्च ।

५३ अथ लक्ष्मणवाक्यश्रवणसन्तुष्टेन रामेण विरचितं लक्ष्मणप्रशंसनम्, त्रिचतुर्दिनावधि कार्याणां स्वस्यादर्शनेन शापभीत्या पूर्वं नृगराजदत्तगोदानविपर्ययविसंवादिविप्रयो राजदर्शनमलभमानयोः शापेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

नृगस्य कृकलासताप्राप्तिः, कालान्तरेऽवतरिष्यमाणवासुदेवशापविमोचनरूपकथाकथनम्, कार्यिणां वीक्षणार्थं लक्ष्मणप्रेषणं च ।

५४ अथ नृगः किमकरोदिति लक्ष्मणाक्षिप्तेन रामेण कथितं नृगस्य मन्त्रिषु स्वपुत्रस्य वसो राज्याभिषेकनियोजनम् , तस्य राजधर्मानुशासनम् , निदाघवर्षहिमघ्नानां श्वभ्राणां निर्माणम् , तत्रास्य प्रवेशश्च ।

५५ अथापरां कथां वक्तुमुद्युक्तेन रामेण कथितमिक्ष्वाकोर्द्वादशेन पुत्रेण निमिना गौतमाश्रमाभ्याशे वैजयन्तपुरनिर्माणम्, तत्र दीर्घसत्राय वसिष्ठवरणम्, पुनरत्र्यङ्गिरसभृगूणां वरणम्, इन्द्रेण पूर्वाहूतस्य वसिष्ठस्य विनाभावाद्राज्ञो गौतमेन यागपूरणमनन्तरमागतेन वसिष्ठेन राज्ञो विदेहत्वशापः, क्रुद्धेन राज्ञापि शापितस्य वसिष्ठस्यापि विदेहत्वप्राप्तिश्च ।

५६ अथ विदेहेन वसिष्ठेन पितुर्ब्रह्मणः समीपे धर्मसंरक्षणार्थं स्वस्य शरीराभ्यर्थनम्, तेन मित्रावरुणायोः रेतः प्रपद्यस्वेति नियोजनम् , क्षीरसागरे वरुणलोकराज्याधिपत्यं प्राप्तेन मित्रेण पूर्ववृत्ताया उर्वश्या वरुणेन पुनर्वरणम्, तस्या अङ्गीकाराद्वरुणेन कुम्भे रेतस उत्सर्जनम् , ततो मित्रेणोर्वश्याः पृथ्व्यां पुरूरवसप्राप्तये शापोत्सर्गो पुरूरवसो नहुषोत्पत्तिश्च ।

५७ अथ तस्मात्कुम्भान्नाहं तव सुत इति मित्रमुक्त्वागस्त्यस्य निर्गमनम् , ततो मित्रावरुणयोर्वसिष्ठसंभूतिः, जातमात्रस्य वसिष्ठस्येक्ष्वाकुणा पौरोहित्याय वरणम् , निमेर्देहं गन्धतैलादिभिः संरक्ष्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

मुनिभिर्यागपूरणम्, तुष्टेन भृगुणा चोदितैर्देवैर्निमेः सर्वप्राणिनेत्रेषु वासाय वरप्रदानम्, ऋषिभिर्मथितात्तद्देहादुत्पन्नस्य मिथिरिति, जननाज्जनक इति, विचेतसो देहाज्जन्मना वैदेह इति च नाम्नां लाभे मिथेरावासभूतस्य पुरस्य मिथिलेति नामप्राप्तिश्च ।

५८ अथ लक्ष्मणेन निमेरक्षमाया हेतुप्रश्नः, रामेण सर्वे ययातितुल्या न भवेयुः, पुरा ययातेर्द्वे भार्ये तयोरेका दैतेयतनया शर्मिष्ठा, अन्या शुक्रदुहिता देवयानी, तयोः क्रमेण पूरुर्यदुरिति द्वौ पुत्रावास्ताम्, राज्ञः शर्मिष्ठापूर्वोः प्रीतिमसहमानयोर्दुहितृदौहित्रयोः प्रीत्यै शुक्रेण ययातिर्जरापीडितशरीरो भवेति शप्त इति कथनम् ।

५९ अथ ययातेरुशनःशापप्राप्तां जरां पूरौ विनिमय्य यौवनग्रहणम्, राज्ञः प्रार्थनामनङ्गीकुर्वते यदवे राक्षसत्वाय शापदानम्, पूरोर्यौवनं पुनर्दत्त्वा राज्याभिषेकवर्णनञ्च ।

६० अथ कदाचिद्वसन्तसमये सभायां श्रीरामसन्निधौ सुमन्त्रेण यमुनातीरवासिनां भार्गवच्यवनादितपस्विनामागमननिवेदनम्, पुनर्द्वाःस्थेनान्तःप्रवेशितानामुपायनग्रहणपूर्वकमागमनकारणप्रश्नः, श्रीरामकृतकार्यनिर्वहणसङ्गरश्रवणसन्तुष्टैर्विरचितं राघवप्रशंसनञ्च ।

६१ अथ भार्गवेण ब्रह्मण्यस्य शरण्यस्य देवप्रियस्य लोलापुत्रस्य मधोस्तपसाराधितेन भगवता शङ्करेण स्वशूलप्रदानम्, अथ तेन स्ववंश्यानामपि पारम्पर्येण शूलस्थैर्याभ्यर्थनम्, एतच्छूलं तव पुत्रस्यैकस्यैव तिष्ठतु तथापि यदा बहिर्निर्गत्य शूलविरहितो युद्ध्येत तदा स मरिष्यति, शूलं मत्समीपमागामिष्यतीति महा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

देववरप्रदानमपि निवेदितवता दृप्तस्य तत्पुत्रस्य लवणस्य दुश्चेष्टितं किं ब्रूमो वयं बाधिताः रावणवधं श्रुत्वा लवणान्तकस्त्वमेवेति मनसि निश्चित्य त्वां शरणं भजाम इति निवेदनम् ।

६२ अथ रामेण लवणः किमाहारः किमाचारः कुत्रास्त इति पृष्टैर्मुनिभिर्लवणस्याहारो ब्राह्मणा मानुषाः सत्त्वानि सर्वाणीति कथितं श्रुतवता लवणवधः कस्यांशोऽयमिति पृष्टयोर्भरतशत्रुघ्नयोः शत्रुघ्नेन लवणो ममैवांश इति प्रार्थितेन रामेण शत्रुघ्नस्य मधुपुराभिषेचननियोजनम् ।

६३ अथाभिषेचनायाग्रजानियोजितेन शत्रुघ्नेनाग्रजयोः स्थितयोरयमभिषेको मम व्रीडाकरोऽप्यग्रजाज्ञाकैङ्कर्यनिर्वहणे मम दोषो न भवेदिति प्रार्थितेन श्रीरामेण ब्राह्मणैर्वसिष्ठादिभिर्ऋत्विग्भिर्नैगमैर्मन्त्रिभिः कन्याभिश्चाभिषेचितस्य शत्रुघ्नस्य पुरा मधुकैटभवधार्थं भगवता नारायणेन सृष्टस्य शरस्य प्रदानपूर्वकं लवणवधोपायबोधनम् ।

६४ अथाग्रजदत्तचतुरङ्गबलमग्रतः प्रस्थापय, वर्षाकाले लवणे बहिर्निर्गते मधुपुरद्वारं सेनां पृष्ठतः कृत्वा त्वमेक एव निरुन्त्स्वेति रामेण बोधितः शत्रुघ्नः सेनां प्रस्थाप्य मासात् परं सर्वान्नमस्कृत्य प्रयाणोद्युक्तोऽभूत् ।

६५ अथ साकेतान्निर्गतेन पथि द्विरात्रमुषित्वा वाल्मीकेराश्रमं गतेनानेन शत्रुघ्नेन तत्रत्ययज्ञविभूतिं वीक्ष्य पृष्टेन वाल्मीकिना युष्माकं पूर्वकेण सुदासपुत्रेण वीरसहेन बाल्य एव मृगयायां शार्दूलरूपिणोर्द्वयोर्निशाचरयोर्निर्मृगीकृतवनयोरन्यतरस्य वधेनावशिष्टो राक्षसो वसिष्ठवेषं धृत्वा सौदासं वसिष्ठ इव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

सामिषमन्नं याचित्वा महानसे रूपान्तरेण सूदो भूत्वा मानुषमांसं पक्त्वा वसिष्ठाय दापायित्वान्तरधात्, तदन्नदानरुष्टेन वसिष्ठेन शप्तेन राज्ञा प्रतिशापाय: जलाहरणम्, तत्पत्न्या मदयन्त्या निषिद्धेन स्वपादावोक्षणात् कल्माषपादाभिख्यां गतेन पुनः प्रार्थिताद्वसिष्ठाच्छापविमोचितेन विरचितेयं यज्ञभूमिरिति कथनम्।

६६ अथ शत्रुघ्नस्य पर्णशालानिवासरात्रौ सीताया दारकद्वयप्रसवं श्रुतवता वाल्मीकिना येन कुशमुष्टिना लवेन च रक्षाबन्धनं कृतं ताभ्यां कुशलवाभ्यामेव तयोः कुशलवाविति नामकरणम्, तयोर्जननं श्रुत्वानन्दपरवशस्य शत्रुघ्नस्य मुनिभिः सह प्रयाणं च।

६७ अथ शत्रुघ्नेन लवणः कीदृक्प्रभावस्तस्य शूलेन के निहता: इति पृष्टेन भार्गवेण च्यवनेन पूर्वं सर्वविजयी युष्मत्कुलकूटस्थो मान्धाता स्वरिन्द्रेणार्धासनगतो भूमौ सर्वजेता त्वं न भवसि, मधुपुरे लवणासुरस्त्वया न निर्जित इत्युक्तो युवनाश्वसुतो मधुपुरं गत्वा तेन शूलेन ससेनो भस्मीकृतः त्वञ्च विजयी भविष्यसीत्युत्साहित इत्यादि।

६८ अथ प्रभाते स्वाहारसङ्ग्रहार्थं पुराद्बहिर्लवणगमनम्, ततःसायुधस्य शत्रुघ्नस्य यमुनानदीतरणपूर्वकं मधुपुरद्वारनिरोधनम्, अर्धदिवसे बहूनां सत्त्वानां भारमुद्वहता पुरद्वारमागतेन लवणेन शत्रुघ्ननिभर्त्सनम्, ततो रोषाविष्टस्य लक्ष्मणानुजस्य गात्रादर्चिर्निर्गमनम्, दिवि भुवि समानप्रभावस्य दशरथस्य रावणहन्तुर्भ्रातुश्च प्रभावसङ्कीर्तनेन सह स्वनामसङ्कीर्तनं च श्रुतवता स्वमातृष्वसुर्भ्रातुर्दशवदनस्य हनन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।  विषयाः ।

श्रवणातिकुपितेन लवणेनायुधाहरणार्थमवकाशप्रदानाय याचनम्, तदनङ्गीकुर्वतोऽनन जीवलोकं सुदृष्टं कुरु प्राणास्तव दुर्लभा इति प्रतिवचनम् ।

६९ अथ लवणशत्रुघ्नयोर्द्वन्द्वयुद्धे लवणकरविसृष्टमहातरुताडितस्य मूर्च्छितस्य राघवस्य भूमौ पतनम्, तदन्तरेऽस्य स्वायुधाहरणाभिलाषं विना भक्ष्योद्वहनम्, तदन्तर एवोत्थितेन शत्रुघ्नेन मार्गनिरोधनपूर्वकं संवर्तसमयसमुज्ज्वलत्सूर्यमण्डलसवर्णस्यातिभीषणस्यामोघबाणधारणेन बिभ्यतो लोकान्वीक्ष्य ससम्भ्रमं पितामहमुपगतवतां देवानां नारायणबाणप्रभाववर्णनपूर्वकं युद्धवीक्षणार्थं विधातुरागमनम्, तत आकर्णाकृष्टविमोचितस्य बाणस्य लवणोरो भित्त्वा रसातलं प्रविश्य पुनः शत्रुघ्नकरप्रवेशः, तत्क्षण एवाहम्पूर्विकया निर्गतयोर्लवणप्राणशूलयोरन्तकान्तकयोः समीपगमनम्, ततः शत्रुघ्नशिरसि पुष्पवर्षपतनम्, राघवजयनिरीक्षणविकसितहृदयपुण्डरीकाणां देवर्षिसिद्धचारणगन्धर्वाणां जयशब्दश्च ।

७० अथ विनिपातितं लवणं वीक्ष्याभ्यागतैः पुरुहूतपुरःसरैर्देवैः शत्रुघ्नाय ससैन्याय धर्मपुरप्रवेशानुज्ञाप्रदानम्, ततो विविधपण्योपशोभितापणचत्वरचैत्योद्यानाभिरामायां नानाविधतरुजालशोभिततीरया विकसितकमलकह्लारकुवलयकुमुदखण्डमण्डितया यमुनानद्या समेतायां मधुपुर्यां राघवानुजराज्यकरणञ्च ।

७१ अथ रामदर्शनाभिलाषेण शत्रुघ्नेनायोध्यां प्रति प्रयाणम्, मध्येमार्गं वाल्मीक्याश्रमगमनम्, ततो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः ।   विषयाः ।

ऽभिवादितेन वाल्मीकिना लवणवधश्रवणसन्तुष्टेन विरचितं शत्रुघ्नप्रशंसनम्, अनुगैः सह रामचरितगानाकर्णनपरवशहृदयस्य शत्रुघ्नस्योपकार्याप्रवेशश्च ।

७२ अथ रात्रौ वाल्मीकिशिष्यकृतरामचरितगानश्रवणस्मरणादलब्धनिद्रः शत्रुघ्नः प्रभाते निर्वर्तितनित्यकृत्यो वाल्मीकिमभिवाद्य तेनाश्लिष्य विसर्जितो लब्धानुज्ञश्चायोध्यां प्रविश्य श्रीरामं दृष्ट्वाभिवाद्य तेन विरचितकुशलप्रश्नो नाहं मधुपुरीं गन्तुमभिलषाम्यत्रैवार्यसमीपे स्थातुमिच्छामीति रामं सम्प्रार्थ्यात्र स्थातुं नोचितं सप्तरात्रमिहोषित्वा ततो मधुपुरीं गच्छेति नियोजितोऽथ सप्तरात्रात् परं भरतलक्ष्मणाभ्यां दूरमन्वीयमानो मधुपुरीमगमत् ।

७३ अथ मृतं बालं सुतं राजद्वारि गृहीत्वा पत्नीसहायस्य द्विजवर्यस्य रोदनम्, तत्कृतराजगर्हणं च ।

७४ अथ द्विजदुःखसमानदुःखः श्रीरामो वसिष्ठवामदेवमार्कण्डेयमौद्गल्यकाश्यपकात्यायनगौतमजाबालिनारदादिभिर्भ्रातृभिर्मन्त्रिभिश्च सम्मन्त्र्य नारदेन युगधर्मप्रकटनपूर्वकं द्विजबालमरणकारणं शूद्रतपश्चरणं निवेद्य तमन्वेषयेति नियोजितः ।

७५ अथ दाशरथिर्द्विजपुत्रकलेवरसंरक्षणं नियुज्य स्मरणमात्रागतं पुष्पकमारुह्य प्रथमं प्रतीचीं तत उत्तरां पश्चात् प्राचीं चान्विष्य दक्षिणस्यां दिशि शैवलस्योत्तरपार्श्वे दुष्करं तपश्चरन्तं कंचिद्वीक्ष्य तस्य जात्याद्यपृच्छत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

७६ अथ दाशरथिः सशरीरस्वर्गगमनाय दुष्करं तपश्चरन्तं शम्बुकनामानं शूद्रं विज्ञाय तस्यासिना शिरश्छित्त्वा देवैः पूजितस्तेभ्यो द्विजबालजीवितागमं श्रुत्वा तैः सहागस्त्याश्रमं गत्वागस्त्यमभिवाद्यागस्त्येनापि स्तुतो हस्ताभरणं स्वीकुर्विति प्रार्थितो राज्ञः स्वस्य प्रतिग्रहानर्हतां निवेद्य तेन लोकपालांशत्वेन ब्रह्मणा सृष्टं क्षुपं राजानं दृष्टान्तीकृत्येन्द्रांशत्वेन प्रतिगृहाणेति प्रार्थितो हस्ताभरणं गृहीत्वा तस्य गमनकारणमन्वपृच्छत् ।

७७ अथ कुम्भसम्भवः स्वस्य हस्ताभरणागमनकारणं वक्तुमारभमाणः पुरा निर्मानुष्ये मृगपक्षिविवर्जिते वने कस्मिंश्चित् तपस्तप्तुं गतोऽहं योजनायामं कञ्चित् सरोवरं तत्र दृष्ट्वा तस्मिन् सरसि हृष्टपुष्टाङ्गं कञ्चिच्छवं वीक्ष्य चिन्तयानः पुनराकाशे दिव्यविमानेऽप्सरोभिः सर्वाभरणभूषिताभिर्विरचितनृत्तगीतसुखमनुभवन्तमपि विमानादवरुह्य सरःस्थितं शवं भक्षमाणं स्वर्गिणमालोक्य को भवान् दिव्यपुरुष एतादृशमनर्हमाहारमङ्गीकरोषीति पृष्टो वृत्तं सर्वं वक्तुमयतिष्ट ।

७८ अथ दिव्यपुरुषः स्ववृत्तान्तं वक्तुमारभमाणः पुरा वैदर्भको राजा सुदेव इत्यभूत्, तस्य कलत्रद्वयमतिष्ठत्, तयोरेका श्वेतनामानं मामजनयदन्या मम यवीयांसं सुरथमजनयत्, पितरि स्वर्गते पौरा मामभ्यषिञ्चन्नहं वर्षसहस्राणि राज्यं धर्मतः परिपाल्य विज्ञातायुरनुजं राज्येऽभिषिच्य मृगपक्षिविवर्जितेऽस्मिन्वनेऽस्य सरसः समीपे दुष्करं तपस्तप्त्वा ब्रह्मलोकमभिसम्पद्य क्षुत्पिपासातुरो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

ब्रह्माणं शरणं गत्वा ब्रह्मणा भवान् पूर्वं तपश्चरणकाले शरीरं संरक्षति स्म, कस्मैचिद्भिक्षार्थिने यतये भिक्षां न दत्तवान् , तस्मात्पङ्क्तिवञ्चनापुष्टं स्वशरीरं सरोगतं भक्षयेत्युक्तस्तद्विमोचनमगस्त्येनाचिराद्भवितेत्युक्तम्, यदि भवानगस्त्योऽसि ममाभरणं गृहीत्वा मां तारयेत्यवोचत् , पुनरहमाभरणमगृह्णं शवं चान्तरधात्, श्वेतोऽपि तृप्तो दिवं जगाम तादिदं हस्तभूषणमित्याह ।

७९ अथ मृगपक्षिविवर्जितस्य वनस्य वृत्तान्तं पृच्छतो राघवस्यागस्त्येन पूर्वं मनोः पुत्रस्येक्ष्वाकोः पुत्रेण शतात्मिकेन दण्डेन विन्ध्यशैवलयोर्मध्ये पर्वतरोधसि मधुमन्तं नाम पुरं लब्धम् ।

८० अथ बहुवर्षगणान् राज्यं पालयतो दण्डस्य स्वगुरोः शुक्रस्याश्रमगमनम्, तत्रैकाकिनीं शुक्रपुत्रीमरजां दृष्ट्वा कामपरवशेन तस्या बलात्कारो वेपमानया तया शुक्रागमनप्रतीक्षणं च ।

८१ अथोशनस आश्रमागमनम्, क्षुत्पिपासातुरेणानेन स्वदुहितृनिरीक्षणेनानिवार्यक्रोधेन ' दण्डः सप्तरात्रेण सभृत्यबलवाहनो नाशमेष्यति, यावद्दण्डविषयस्तावदाचिरेण पांसुवर्षेण निर्मनुष्यं मृगपक्षिविवर्जितमरण्यं भवत्विति ' च शापदानम् , तदाप्रभृत्यस्य दण्डकारण्याभिधा जातेति कथनम् , सूर्येऽस्तंगतेऽगस्त्येन सन्ध्यानिमित्तं रामप्रेषणं च ।

८२ अथाप्सरोवरसेविते तस्मिन् सरसि विगाह्य सायंसन्ध्यानुष्ठानपूर्वकं श्रीरामस्यागस्त्याश्रमागमनम्, कन्दमूलौषधिशाल्यन्नादिभिरातिथ्यम्, तत्रैव रात्रियापनम् , प्रभाते विरचितकाल्यकृत्येनागस्त्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

स्तोत्रमगस्त्येनापि ऋषिनिकटे रामस्तवः, पुनरगस्त्याभिवादनपूर्वकं पुष्पकारोहणमर्धदिवसेऽयोध्यागमनम्, गृहमध्यकक्ष्यायां पुष्पकादवरोहणम्, पुष्पकविसर्जनम्, भरतलक्ष्मणाभ्यां द्वाःस्थप्रेषणं च ।

८३ अथ द्वाःस्थेन कुमारयोरानयनम्, तयोरालिङ्गनपूर्वकं रामेण राजसूययागकरणाय बोधनम्, भरतेन वश्यानां सर्वराज्ञां सर्वप्रजानां हिंसामसहमानेन तन्निरोधनमवरजेनोक्तं पूर्वजेनाङ्गीकृतम् ।

८४ अथ लक्ष्मणेनाश्वमेधयागकरणाय बोधनम्, पूर्वं वृत्रे लोकत्रयं स्ववशे कृत्वा कदाचित्तपःकृतमतौ पुत्रं मधुरेश्वरं राज्ये निवेश्य दुष्करं तपः कुर्वति शक्रो विष्णुं शरणं गत्वा वृत्रोऽतीव बलवान् किंच दुष्करं तपश्चरति तद्धननविषये त्वया विना नान्या गतिरिति प्रार्थितवानिति ।

८५ अथ वृत्रवधमशेषेण वदेति रामनियोजितेन लक्ष्मणेनेन्द्रप्रार्थितो विष्णुस्तेनाहं पूर्वं स्तुतस्तस्य हननं कर्तुं मम नोचितं मया विना युष्माकं नान्या गतिस्तस्मादुपायं वच्मि, आत्मानं त्रेधा विभज्यैकेनांशेन वज्रमेकेनेन्द्रमन्येन भूतलं प्रविशामि तेन वृत्रं हनिष्यतन्द्रि इति देवानुक्त्वान्तरधात्, ततो देवाः सेन्द्रा यत्र वृत्रस्तपति तत्र गत्वा दुःखिता बभूवुस्तदेन्द्रो वज्रेण वृत्रमहनत्, ततो वासवं ब्रह्महत्यानुव्रजद्देवा विष्णुं स्तुत्वा विष्णुनात्मीयाश्वमेधयागकरणाय बोधिता इति ।

८६ अथ ब्रह्महत्यया परीते वासवे विप्रनष्टेन्द्रं लोकं शून्यं ध्वस्तां भूमिं निरानन्दाः प्रजा दृष्ट्वा देवा विष्णूपदिष्टं वैष्णवमश्वमेधं यत्रेन्द्रः स्थितस्तत्र समाचरन्, ततो ब्रह्महत्या दुर्वासा पुरत आगत्य क मे स्थानं विधास्यथेत्यवोचत्, ततो देवेभ्यः स्वात्मानं चतुर्धा विभज्यैकेनां-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

शेन पूर्णासु नदीषु चतुरो वार्षिकान्मासान्दर्पघ्नी वसिष्याम्येकेन भूम्यां सदा वसिष्यामीतरेण युवतिषु मासि मासि त्रिरात्रं दर्पघ्नी निवसिष्याम्यन्येन ये ब्राह्मणहन्तारस्तत्र वसिष्यामीति वराँल्लब्ध्वा गच्छद्देवा इन्द्रं प्रणम्य विज्वरं स्वर्गमानिन्युरिति कथाशेषः पूरितो लक्ष्मणेनाश्वमेधप्रभाव एतादृश इति प्रकाशितश्च।

८७ अथ लक्ष्मणेन वृत्रघातचरिते समापिते रामोऽप्येनां कथां वक्तुमारभमाणः पूर्वं कर्दमप्रजापतेः सुत इलो नाम धर्मिष्ठो राजा धर्मेण प्रजाः पालयन् कदाचिन्मृगयां पर्यटन् गुहोत्पत्तिस्थानं गतस्तत्र देव्योमया रममाणेन नारीरूपेण शम्भुना स्त्रीभूतं तत्रत्यपुरुषवर्गं दृष्ट्वा सानुगमात्मानं च स्त्रीकृतं वीक्ष्यातिचकितमतिस्तमेव वृषभध्वजं तुष्ट्वा पुरुषत्वं विनान्यं वरं वरयेत्युक्तः, पुनरुमाप्रसादेन मासमेकं पुंस्त्वं मासमेकं स्त्रीत्वं च प्रतिपद्य मासं पुरुषो भूत्वा पुनर्मासं त्रिलोकसुन्दरीला नाम पुरन्ध्र्यभूदिति।

८८ अथ भरतलक्ष्मणयोः कथायां कौतूहलं वीक्ष्य श्रीरामः कथां पूरयमाणः स्त्रीभूतेला सानुगा तत्र वने रममाणातिरमणीयं कंचित्सरोवरं वीक्ष्यानुगताभिर्विहर्तुकामा जलमध्ये तपन्तं सोमसुतं बुधमपश्यत्। सोऽपीमां दृष्ट्वा कामपरवशो बुद्ध्या विचार्य ताः स्त्रिय आहूय तासां किम्पुरुषसुखानुभवसदृशं किम्पुरुषीरूपं प्रादादित्यवादीदिति।

८९ अथ किम्पुरुषोत्पत्तिं श्रुतवतोर्भरतलक्ष्मणयोर्भूयोऽपि कथां कथयता रामेण विद्रुताः सर्वा दृष्ट्वा बुध इलां सर्वाङ्गसुन्दरीं मोहपरवशोऽरमयत्। मासे पूर्णे सुप्तोत्थित इलस्तपन्तं सोमसुतं वीक्ष्य मामनुगताः कुत्र गता इत्यपृच्छत्। सोऽपि अश्मवर्षेण सर्वे निपातिता इत्यवोचत्। इलोऽपि राज्यगमनाय



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

नैच्छत्, बुधेन संवत्सरान्तं वसेत्युक्तो मासं पुरुषो भूत्वा मासं स्त्री भूत्वा नवमे मासि पुरूरवसं नाम पुत्रं जनयित्वा बुधाय दत्त्वा संवत्सरान्ते पुरुषत्वप्राप्तिकाले तेन कथाभिरभिराञ्जित इति ।

९० अथ पुंस्त्वं प्राप्त इले बुधाहूतेन संवर्तेन सह च्यवनारिष्टनेमिप्रमोदनमोदकरदुर्वासःप्रभृतीनां मुनीनामागमनम्, तेष्विलवृत्तान्तनिवेदनम्, तेषामन्योन्यं संवदतां कर्दमस्य पुलस्त्यक्रतुवषट्कारोंकारैः सहागमनमागतानां द्विजानामिलहितैषिणामन्योन्यसम्भाषणम्, एतैः सह कर्दमेन प्रजापतिना महादेवप्रीत्यै अश्वमेधयागकरणम्, प्रसन्नेन शम्भुनेलस्य स्त्रीत्वनिमोचनम्, शशविन्दुनाम्ना पुत्रेणाधिष्ठितं बाह्लिकमुत्सृज्येलेन मध्यदेशे प्रतिष्ठाननगरे राज्यकरणम्, अन्ते पुरूरवसं प्रतिष्ठाप्य ब्रह्मलोकगमनम्, अश्वमेध एतादृश इति रामकृतवर्णनं च ।

९१ अथ रामप्रेरितेन लक्ष्मणेन वसिष्ठादीनामृषीणामानयनम्, रामेणाभिवादनपूर्वकमश्वमेधकरणाय स्वाभिप्रायनिवेदनम्, आशीर्वादपूर्वकं तेषामङ्गीकारे रामेण सुग्रीवविभीषणयो राज्ञां चाह्वानाय लक्ष्मणनियोजनम्, नैमिषारण्ये यज्ञवाटकरणाय नियोजनम्, पुनस्तण्डुलमुद्गमाषतिलसूपस्नेहाज्यादिपूरितयागसामग्रीं पुरस्कृत्य सुवर्णप्रतिकृत्या सीतया मातृभिश्च सह भरतप्रेषणम्, तत्रागच्छतां राज्ञामृषीणामुपकार्यानिर्माणाय बोधनं च ।

९२ अथ सर्वं संस्थाप्य रामेण कृष्णसारमृगवर्णाश्वमोचनम्, तद्रक्षणायाश्वचर्यायै च ऋत्विग्भिर्बलैश्च सह लक्ष्मणप्रेषणम्, ततो नैमिषे यज्ञवाटदर्शनविकसितहृदयपुण्डरीकेण रामेण तत्र निवसतां राज्ञा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

सुपायनस्वीकारप्रत्यर्चनापूर्वकमुपकारिकानिवेदनम्, सानुगानां तेषां शत्रुघ्नसहायेन भरतेनान्नदानवस्त्राणां प्रदापनम् , ततः प्रणतैर्वानरैः सुग्रीवेण च विप्राणां परिवेषणम्, उग्रतपसामृषीणां विभीषणेन पूजाविधानमेवमहरहरुपचीयमानाया यज्ञसमृद्धेः संवत्सरान्तं प्रवर्तनञ्च ।

९३ अथ यज्ञवाटं प्रति सशिष्यस्य वाल्मीकेरागमनम् , ऋषिवाटनिकट उटजपरिकल्पनम् , तत्र फलमूलपूरितवनेभ्यो यथारुचि फलभक्षणनियोगपुरस्सरं समागतर्षीणां भगवच्छ्रीरामचन्द्रस्य चेच्छया तत्पुरस्ताल्लयसमन्वितं वीणागानपुरःसरं रामायणमादितो विंशतिसर्गक्रमेणान्यूनातिरिक्तं प्रतिदिनं यथाक्रमं गायेथाम् , कौ युवामिति पृष्टौ चेद्वाल्मीकिशिष्याविति ब्रूतामिति कुशलवयोर्नियोजनम् ।

९४ अथ तयोर्गानमाधुर्यश्रवणपरवशहृदयेन रामेणाहूतानां चतुर्वेदपारगाणां मूर्च्छारोहणादिस्वरलक्षणज्ञानां पुराणज्ञानां सर्वशास्त्रकुशलानां पुरतस्तयोर्गानारम्भे नारदोपदिष्टसंक्षेपगानपूर्वकं यागाभ्यन्तरे विंशतिसर्गसमापनावसरे रामतुल्ययोरेतयो रामेण अष्टादशसहस्रसुवर्णदानाय भ्रातरि नियोजिते फलमूलाशिनोरावयोः किमनेनेति ताभ्यां तन्निरोधनम्, ततो रामेण ग्रन्थकर्ता कुत्रास्ते, किं प्रमाणम्, का प्रतिष्ठा तस्येति पृष्टयोः कर्ता भगवान् वाल्मीकिरत्रैवागतः, चतुर्विंशतिसहस्रश्लोकाः प्रमाणम्, पञ्च सर्गशतानि, काण्डानि षट् सोत्तराणि, गाने श्रवणेच्छा चेद्विस्रब्धं शृणुतेति प्रतिवचनम् , बाढमित्युक्त्वा श्रुत्वा च रामस्य ऋषिभिः सह कर्मशालायां गमनम् ।

९५ अथैवं बहुष्वहःसु गायतोस्तयोर्ग्रन्थान्तरे सीतापुत्रत्वविज्ञानेन सीताशपथनिमित्तं वाल्मीकये दूतप्रेष-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

णम् , मुनिना तथैवाङ्गीकारे राज्ञामृषीणां तन्निवेदनम् , तै रामगुणश्लाघनम् , ततस्तेषां विसर्जनं च ।

९६ अथ रामाहूतानां वसिष्ठादीनामृषीणां सर्वेषां जनानां दोषप्रयोक्तॄणां च मध्ये वाल्मीकिना सीतानयनपूर्वकं सीताशुद्धिं ज्ञानवता सीतेयं निर्दोषा ममान्तरात्मा मनःषष्ठानि भूतानि च शुद्धां विदन्ति इयमशुद्धा चेदहं जन्मप्रभृत्यनुष्ठीयमानतपःफलं नानुभवामि, शुद्धेति रामोऽपि विज्ञाय लोकापवादं प्रमार्ष्टुकामः सीताशुद्धेर्दृढीकरणं चकार ।

९७ अथ वाल्मीकिनैवमुक्ते ब्रह्मवासवादिसर्वदेवेष्वागतेषु राजभिः पृथ्वीसुरैर्नागरैः शोभितायां सभायां साञ्जलिबन्धे रामे मुनिवाक्यैरेवाकल्मषैर्मम प्रत्ययेऽपि सीताशपथात् सर्वेषां प्रत्यये सति मम प्रीतिरस्तीति निवेदयति, दिव्यगन्धयुतस्य वायोः प्रचारः, ततो रामं विना नान्यं मनसा स्मरामि । यदि मनसा वाचा वपुषा राममेव समर्चये यदि माधवी मे विवरं दास्यतीति काषायवासिन्या सीतया शपथ-करणम्,क्षणेन भूतलादुत्थिते नागैर्दिव्यवपुभिर्धृते कमनीयसिंहासने धृतदिव्यशरीरया भूम्या गृहीतहस्तायाः सीताया उपवेशनम् , आकाशात्पुष्पवृष्टिपतनम् , तस्या रसातलप्रवेशः, सर्वजगतां विस्मयसंमोहौ च ।

९८ अथ सीताया रसातलप्रवेशाद्दतिदूयमानमानसेन श्रीरामेण सकोपेन भूमिं प्रति तव सुतां सीतां जामातुर्मम समीपं नानयेथा यदि शरैः सशैलवनां त्वां विधमिष्यामीत्युदीरणम् , ब्रह्मणा पूर्वकं भावं स्मर,सुखं रसातलं प्रविष्टा सीता पुनः स्वर्गे त्वया सङ्गमिष्यत्येतत्परिषन्मध्ये तवेदं सोत्तरं वाल्मीकिकृतं काव्यं श्रुतम्, शेषं भविष्यदुत्तरमुत्तमः काव्यनायकस्त्वमेव परमऋषिस्त्वमेवार्षिपूज्यः शृणुष्वावहितो मुनिभिः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः। विषयाः।

सद्देति कथनम्, पुनस्तस्यान्तर्धानम्, श्रीरामेण वाल्मीकये श्वो गापयितव्यं भविष्यदुत्तरमिति निवेदनम्, ततः पर्णशालागमनं च।

९९ अथ प्रभाते सर्वमुनिभिर्भविष्यदुत्तरश्रवणम्, अश्वमेधं समाप्य सीतादुःखं मनसि निधायायोध्यागमनम्, तत्राश्वमेधशतं काञ्चनमय्या सीतया सहानेकविधयागांश्च विधाय स्वर्गतानां मातॄणामौर्ध्वदैहिककरणञ्च।

१०० अथ युधाजिता गार्ग्यप्रेषणम्, अयोध्यामागतेन गार्ग्येण युधाजिद्दत्तपारितोषिकस्याहरणम्, रामेण प्रत्युत्थानपूर्वकं पारितोषिकस्वीकारः, रामप्रश्नानुगुणमुत्तरं दत्त्वा सिन्धोरुभयपार्श्वे फलमूलोपशोभितः कश्चिद्देशः शैलूषपुत्रैर्गन्धर्वैराक्रान्तस्तान्निर्जित्य स्ववशे कुरुष्व नान्यैः प्रवेष्टुं शक्यत इति युधाजिताभिहितमिति वदतो गार्ग्यस्य वचःश्रवणपरितुष्टेन रामेण ऋषेः पुरत इमौ स्वकुमारौ तक्षपुष्कलौ भरतो गृहीत्वा युधाजिता बलेन च सह गत्वा तान्निर्जित्य तत्र संस्थाप्य मत्समीपमागामिष्यतीत्युभावभिषिच्य भरतेन चतुरङ्गबलेन सह प्रेषणम्, तेषां केकयनगरप्रापणं च।

१०१ अथ भरतयुधाजितोर्युद्धाय गन्धर्वदेशगमनम्, भरतमागतं श्रुत्वा युद्धायागतानां गन्धर्वाणां भरतेन सप्तरात्रं युद्धप्रवर्तनम्, ततो भरतेन संवर्तास्त्रेण कामरूपिणां त्रिकोटिगन्धर्वाणां हननम्, तक्षपुष्कलयोस्तक्षशिलापुष्कलावतनगर्योः प्रतिष्ठापनम्, पञ्चवर्षादनन्तरं भरतस्यायोध्यागमनमग्रजाभिवादनपूर्वकं गन्धर्ववधनिवेदनञ्च।

१०२ अथ लक्ष्मणसुतयोरङ्गदचन्द्रकेत्वोरभिषेचनम्, लक्ष्मणानुगतस्याङ्गदस्य कारुपथे पाश्चात्यदेशेऽ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

ङ्गदीयनगरीप्रवेशः, भरतानुगतस्य चन्द्रकेतोर्मल्लविषये चन्द्रकान्तनगरीप्रवेशः, ततः संवत्सरादनन्तरं भरतलक्ष्मणयोरयोध्यागमनमेवं दशवर्षसहस्राणि सुखेन त्रेताग्निवर्चसामेतेषां धर्मात्प्रजारक्षणम् ।

१०३ अथ कस्याचित्कालस्य तापसरूपस्यागमने रामाय लक्ष्मणेन तदागमननिवेदनम्, तापसदूतस्यान्तःप्रवेशनम्, रामेणासनादिभिरभ्यर्चनपूर्वकमागमनपूर्वकमागमनप्रयोजनप्रश्नः, तेनावयोः संभाषणश्रवणदर्शनकर्तुर्वधायाज्ञां कुर्विति प्रतिवचनम्, तथैव रामेण लक्ष्मणस्य नियोजनञ्च ।

१०४ अथ रामाय स्वागमनकारणनिवेदनायोपक्रममाप्तस्य दूतस्य तावके पूर्वभावेऽहं सर्वसमाहरः पुत्रः पुरा लोकान् संक्षिप्य महार्णवेऽप्सु शयानस्य भूधरणक्षमं भोगवन्तं नागराजं माययोत्पाद्य मां च नाभिकमले सृष्टवतो द्वौ मधुकैटभौ जनयित्वा तयोरस्थिकूटाद्रिपरिवृतायां मेदिन्यां मम प्राजापत्यं दत्तवतस्त्वदाज्ञासृष्टदेवादिसंरक्षणायादित्यां पुत्रत्वं गतस्यानन्ताचिन्त्याद्भुतशक्तेर्भूमौ रावणं सपुत्रबान्धवं निहन्तुमवतीर्णस्य सहस्राधिकदशवर्षसहस्रायुःपूर्णस्य तव देवलोकागमनेऽभिलाषो यदि सनाथा वयमिति ब्रह्मणा त्वत्सन्निधौ विज्ञापनार्थं प्रेषित इति निवेदनम्, लोकसंरक्षणार्थमवतीर्णोऽहं यत एवागतस्तत्र गन्तुं कृतत्वरो भवामीति प्रतिवचनं च ।

१०५ अथ राजद्वारि दुर्वाससोऽभिगमनम्, स्वागमनं रामाय निवेदयितुं लक्ष्मणप्रेषणम्, लक्ष्मणेनाभिवादनपूर्वकं किङ्करोऽस्मि महामुने साधयेऽहं तवार्थमद्य रामो व्यग्रस्तद्दर्शनायासमयोऽयमिति प्रार्थितस्याप्यस्य शापारम्भमसहमानेन सौमित्रिणा रामायात्रेयागमननिवेदनम्, कालविसर्जनम्, दुर्वाससो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

दर्शनाभिवादनपूर्वकमागमनकारणप्रश्नः, वर्षसहस्रसमापिततपसो मम सिद्धमन्नं दातुमर्हसीति तस्य प्रतिवचनोत्तरक्षणे सिद्धान्नोपाहरणम्,भुक्त्वा सन्तुष्टस्यर्षेर्गमनम्,दुःखसंतप्तेन रामेण कालवाक्यस्मरणं च।

१०६ अथ प्रतिज्ञास्मरणदुःखितमग्रजं वीक्ष्य लक्ष्मणेन निजप्रतिज्ञानिर्वहणेन लोकान्पावयेति सहर्षं प्रार्थितेन रामेण मन्त्रिपुरोधसामाकर्णनम्, पुरोधसादिष्टेन स्वानुजाविसर्जनम्, ततो लक्ष्मणेन सरयूगतेन स्नातेन प्राणापानसमीकरणपूर्वकमिन्द्रियवशीकरणम्,तत्समयसमागतैर्देवैः सशरीरस्यास्य स्वर्गप्रापणं च।

१०७ अथ लक्ष्मणविरहासहिष्णुना रामेण मन्त्रिणां वसिष्ठस्य पुरतो भरतं राज्येऽभिषिच्य स्वयं वनं गत्वा लक्ष्मणगतिं गमिष्यामीति निवेदनम् , तच्छ्रवणमूर्छितानां प्रकृतीनामधःपतनम् , मूर्च्छितेन भरतेन कोसलेषूत्तरकोसलेषु च कुशलवयोरभिषेककरणाय शत्रुघ्नाय दूतप्रेषणाय च प्रार्थनम् , वसिष्ठेन भूमौ पतितानां प्रकृतीनां निरीक्षणाय रामे निवेदनम् , राघवेण तासामभिमतप्रश्ने ताभिः प्रकृतिभिर्दारैः पुत्रैः सहानुयात्रावरणम्, ततः कोसलेषु कुशमुत्तरकोसलेषु लवं चाभिषिच्याङ्के निधाय मूर्ध्न्युपाघ्राय चतुरङ्गबलसहाययोरुभयोः स्वपुराभ्यां प्रेषणं च ।

१०८ अथ रामप्रेषितानां दूतानां मधुरागमनम्, शत्रुघ्नाय लक्ष्मणत्यागकुशलवाभिषेचनस्वर्गगमनोद्यमनादिनिवेदनम्, ततः शत्रुघ्नेन स्वपुत्रयोः सुबाहुशत्रुघातिनोर्मधुरायां वैदिशे चाभिषेचनपूर्वकं समांशेन बलप्रदानम्, यथाभागं धनप्रदानम्, तत एकेन रथेनागतस्य शत्रुघ्नस्यायोध्यायां रामाभिवादनम्, रामे स्वानुयात्रानिवेदनम् , ततो वानराणामनुगमनाङ्गीकरणम् , सुग्रीवप्रार्थनाभ्युपगमो विभीषणस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्गाः । विषयाः ।

यावच्चन्द्रसूर्यौ तिष्ठतो यावन्मेदिनी वर्तते तावत्सर्वदेवाराध्यं रङ्गनाथमाराधयन् राज्ये प्रजा धारयस्वेति नियोजनम् ,हनूमतो यावद्रामकथा लोके तावत्सुखं तिष्ठेति नियोजनम्, जाम्बवन्मैन्दद्विविदानां कलियुगावधिवर्तनायानुज्ञा, तथैव तैः पञ्चभिरङ्गीकारश्च ।

१०९ अथायोध्यावासिभिः सर्वप्राणिभिश्चराचरैर्भरतशत्रुघ्नाभ्यां च पुरो वसिष्ठाधिष्ठिताग्निहोत्रेण साकं पार्श्वयोरधिगताभ्यां श्रीह्रीभ्यां रामस्य महाप्रस्थानम् ।

११० अथाध्यर्धयोजने सरय्वां श्रीरामेण पादयोर्विन्यस्तयोः सतोर्ब्रह्मागमनम्, ब्रह्मणा वैष्णवं शुद्धसत्त्वमाकाशं प्रपद्यस्वेति प्रार्थितेन श्रीरामेणानुगतानां सर्वेषां पुण्यलोकप्राप्तये नियोजनम्, ततः सरयूत्यक्तशरीराणामभिगतदिव्यवपुषां ब्रह्मनिर्दिशितसान्तानिकलोकप्राप्तिः, वानराणां स्वस्वयोनिषु देवेषु प्रवेशः, सुग्रीवस्य सूर्यमण्डलगमनम्, यच्च किञ्चित्तिर्यगपि मां मनसा स्मरन्मुञ्चति कलेवरं तत्सर्वमपि सान्तानिकं लभेतेत्यनुगृह्णन्नागतान् सान्तानिके स्वर्गे संस्थाप्य भगवतो देवदेवस्य श्रीभूमिनीलासमेतस्याचिन्त्याद्भुतशक्तेर्दिव्यतेजसो नारायणस्य स्वलोकगमनं च ।

१११ अथैतदाख्यानं पठितॄणां श्रोतॄणां च फलवैभवमाहैकादशोत्तरशततमे ।

इत्युत्तरकाण्डकथानुक्रमणिका ।

## ॥ इति वाल्मीकीयरामायणस्यानुक्रमणिका समाप्ता ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रीगणेशाय नमः ॥ ॥ अथ रामायणमाहात्म्यम् ॥ श्रीरामः शरणं समस्तजगतां रामं विना का गती रा- मेण प्रतिहन्यते कलिमलं रामाय कार्यं नमः ॥ रामात्त्रस्यति कालभीमभुजगो रामस्य सर्वं वशे रामे भक्तिरखंडिता भवतु मे राम त्वमेवाश्रयः ॥ १ ॥ चित्रकूटालयं राममिंदिरानंदमंदिरम् ॥ वंदे च परमानंदं भक्तानामभयप्रदम् ॥ २ ॥ ब्रह्मविष्णुमहेशाद्या यस्यांशा लोकसाधकाः ॥ तमादि- देवं श्रीरामं विशुद्धं परमं भजे ॥ ३ ॥ ऋषय ऊचुः ॥ भगवन्सर्वमाख्यातं यत्पृष्टं विदुषा त्वया ॥ संसारपाशबद्धानां दुःखानि सुबहूनि च ॥ ४ ॥ एतत्संसारपाशस्य च्छेदकः कतमः स्मृतः ॥ कलौ वेदोक्तमार्गाश्च नश्यंतीति त्वयोदितम् ॥ ५ ॥ अधर्मनिरतानां च यातनाश्च प्रकीर्तिताः ॥ घोरे कलियुगे प्राप्ते वेदमार्गबहिष्कृते ॥ ६ ॥ पाखंडत्वं प्रसिद्धं वै तत्सर्वं परिकीर्तितम् ॥ कामार्ता ह्रस्वदेहाश्च लुब्धा अन्योन्यतत्पराः ॥ ७ ॥ कलौ सर्वे भविष्यंति स्वल्परायो बहुप्रजाः ॥ स्त्रियः स्वपोषणपरा वेश्या लावण्यशालिनः ॥ ८ ॥ पतिवाक्यमनादृत्य सदान्यगृहतत्पराः ॥ दुःशीला दुष्टशीलेषु करिष्यंति सदा स्पृहाम् ॥ ९ ॥ असंवृत्ता भविष्यंति पुरुषेषु कुलांगनाः ॥ पुरुषा- नृतभाषिण्यो देहसंस्कारवर्जिताः ॥ १० ॥ वाचालाश्च भविष्यंति कलौ प्राप्ते च योषितः ॥ भिक्षवश्चापि मित्रादिस्नेहसंबंधयंत्रिताः ॥ ११ ॥ अन्योपाधिनिमित्तेन शिष्यानुग्रहलोलुपाः ॥ पाखंडालापनिरताः पाखंडजनसंगिनः ॥ १२ ॥ यदा द्विजा भविष्यंति तदा वृद्धिं गतः कलिः ॥ विप्रवंशोद्भव श्रेष्ठ उपवीतं शिखां त्यज्येत् ॥ १३ ॥ कथं तन्निष्कृतिं याति वद सूत महामते ॥ राक्षसाः कलिमाश्रित्य जायंते ब्रह्मयोनिषु ॥ १४ ॥ परस्परं विरुध्यंति भगवद्धर्मबंधकाः ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्विजानुष्ठानरहिता भगवद्धर्मवर्जिताः ॥ १५ ॥ कलौ विप्रा भविष्यंति कंचुकोष्णीषधारिणः ॥ घोरे कलियुगे ब्रह्मन् जनानां पापकर्मणाम् ॥ १६ ॥ मनःशुद्धिविहीनानां निष्कृतिश्च कथं भवेत् ॥ शूद्रहस्तोदकं पक्कं शूद्रैश्च सह भोजनम् ॥१७॥ शौद्रमन्नं तथाश्नीयात्कथं शुद्धिमवाप्नुयात् ॥ यथा तुष्यति देवेशो देवदेवो जगद्गुरुः ॥ १८ ॥ तन्नो वदस्व सर्वज्ञ सूत कारुण्यवारिधे ॥ १९ ॥ वद सूत मुनिश्रेष्ठ सर्वमेतदशेषतः ॥ कथं न जायते तुष्टिः सूत त्वद्वचनामृतात् ॥ २० ॥ सूत उवाच ॥ शृणुध्वमृषयः सर्वे यदिष्टं वो वदाम्यहम् ॥ गीतं सनत्कुमाराय नारदेन महात्मना ॥ २१॥ रामायणमहाकाव्यं सर्ववेदार्थसंमतम् ॥ सर्वपापप्रशमनं दुष्टग्रहनिवारणम् ॥ २२ ॥ दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफलप्रदम् ॥ रामचन्द्रगुणोपेतं सर्वकल्याणसिद्धिदम् ॥ २३ ॥ धर्मार्थकाममोक्षाणां हेतुभूतं महाफलम्॥ अपूर्वपुण्यफलदं शृणुध्वं सुसमाहिताः॥२४॥महापातकयुक्तो वा युक्तो वा सर्वपातकैः॥ श्रुत्वैतदार्षं दिव्यं हि काव्यं शुद्धिमवाप्नुयात्॥२५॥रामायणे प्रवर्तंते सज्जना ये जगद्धिताः॥त एव कृतकृत्याश्च सर्वशास्त्रार्थकोविदाः ॥ २६ ॥ धर्मार्थकाममोक्षाणां साधनं च द्विजोत्तमाः ॥ श्रोतव्यं च सदा भक्त्या रामाख्यानं तदा नृभिः॥२७॥ पुरार्जितानि पापानि नाशमायांति यस्य वै ॥ रामायणे महाप्रीतिस्तस्य वै भवति ध्रुवम् ॥२८॥ रामायणे वर्त्तमाने पापपाशेन यंत्रितः॥ अनादृत्यान्यथा गाथासक्तबुद्धिः प्रवर्तते ॥२९॥ ? तस्मात्तु रामायणनामधेयं परं तु काव्यं शृणुत द्विजेंद्राः ॥ यस्मिञ्छ्रुते जन्मजरादिनाशो भवत्यदोषः स नरोऽच्युतः स्यात् ॥३०॥ वरं वरेण्यं वरदं तु भाव्यं निजप्रभाभासितसर्वलोकम् ॥ संकल्पितार्थप्रमदादिकाव्यं श्रुत्वा व्रजेन्मोक्षपदं मनुष्यः ॥३१॥ ब्रह्मेशविष्ण्वाख्यशरीरभेदैर्विश्वं सृजत्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्ति च पाति यश्च ॥ तमादिदेवं परमं परेशमाधाय चेतस्युपयाति मुक्तिम् ॥३२॥ यो नामजात्यादिविकल्पहीनः परः पराणां परमः परः स्यात्॥वेदांतवेद्यः स्वरुचा प्रकाशः स वीक्ष्यते सर्वपुराणवेदैः॥३३॥ ऊर्जे माघे सिते पक्षे चैत्रे च द्विजसत्तमाः ॥ नवम्यहनि श्रोतव्यं रामायणकथामृतम् ॥ ३४ ॥ इत्येवं शृणुयाद्यस्तु श्रीरामचरितं शुभम् ॥ सर्वान्कामानवाप्नोति परत्रामुत्र चोत्तमान् ॥ ३५ ॥ त्रिसप्तकुलसंयुक्तः सर्वपापविवर्जितः ॥ प्रयाति रामभवनं यत्र गत्वा न शोच्यते ॥३६॥ चैत्रे माघे कार्तिके च सिते पक्षे च वाचयेत् ॥ नवम्यहानि तस्मात्तु श्रोतव्यं च प्रयत्नतः ॥३७॥रामायणं चादिकाव्यं स्वर्गमोक्षप्रदायकम् ॥ तस्मात्कलियुगे घोरे सर्वधर्मबहिष्कृते ॥ ३८ ॥ नवम्यहानि श्रोतव्यं रामायणकथामृतम् ॥ रामायणपरा ये तु घोरे कलियुगे द्विजाः॥३९॥ते नराः कृतकृत्याश्च न कलिर्बाधते हि तान्॥ कथा रामायणस्यापि नित्यं भवति यद्गृहे॥४०॥तद्गृहं तीर्थरूपं हि दुष्टानां पापनाशनम्॥तावत्पापानि देहेऽस्मिन्निवसंति तपोधनाः॥४१॥ यावन्न श्रूयते सम्यक् श्रीमद्रामायणं नरैः॥दुर्लभैव कथा लोके श्रीमद्रामायणोद्भवा॥ ४२॥कोटिजन्मसमुत्थेन पुण्येनैव तु लभ्यते ॥ ऊर्जे माघे सिते पक्षे चैत्रे च द्विजसत्तमाः॥४३॥यस्य श्रवणमात्रेण सौदासोऽपि विमोचितः ॥ गौतमशापतः प्राप्तः सौदासो राक्षसीं तनुम् ॥ ४४ ॥ रामायणप्रभावेण विमुक्तिं प्राप्तवान्पुनः ॥ यस्त्वेतच्छृणुयाद्भक्त्या रामभक्तिपरायणः ॥ ४५ ॥ स मुच्यते महापापैरुपपातकराशिभिः ॥४६॥ इति श्रीस्कंदपुराणे उत्तरखंडे नारदसनत्कुमारसंवादे रामायणमाहात्म्ये प्रथमोऽध्यायः ॥ १ ॥ ऋषय ऊचुः ॥ कथं सनत्कुमाराय देवर्षिर्नारदो मुनिः ॥ प्रोक्तवान्सकलान्धर्मान्कथं च मिलितावुभौ ॥१॥ कस्मिन्क्षेत्रे स्थितौ तात तावुभौ ब्रह्मवादिनौ ॥ यदुक्तं नारदेनास्मै तन्नो ब्रूहि महामुने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥२॥ सूत उवाच ॥ सनकाद्या महात्मानो ब्रह्मणस्तनयाः स्मृताः ॥ निर्ममा निरहंकाराः सर्वे ते ह्यूर्ध्वरेतसः ॥ ३ ॥ तेषां नामानि वक्ष्यामि सनकश्च सनंदनः ॥ सनत्कुमारश्च तथा सनातन इति स्मृतः ॥ ४ ॥ विष्णुभक्ता महात्मानो ब्रह्मध्यानपरायणाः ॥ सहस्रसूर्यसंकाशाः सत्यवंतो मुमुक्षवः ॥५॥ एकदा ब्रह्मणः पुत्राः सनकाद्या महौजसः॥ मेरुशृंगं समाजग्मुर्वीक्षितुं ब्रह्मणः सभाम्॥६॥ तत्र गंगां महापुण्यां विष्णुपादोद्भवां नदीम् ॥ निरीक्ष्य स्नातुमुद्युक्ताः सिताख्यां प्रथितौजसः॥७॥ एतस्मिन्नंतरे विप्रा देवर्षिर्नारदो मुनिः॥ आजगामोच्चरन्नाम हरेर्नारायणादिकम् ॥ ८ ॥ नारायणाच्युतानंत वासुदेव जनार्दन ॥ यज्ञेश यज्ञपुरुष राम विष्णो नमोऽस्तु ते ॥९॥ इत्युच्चरन्हरेर्नाम पावयन्निखिलं जगत्॥ आजगाम स्तुवन्गंगां मुनिर्लोकैकपावनीम् ॥१०॥ अथायांतं समुद्वीक्ष्य सनकाद्या महौजसः ॥ यथार्हामर्हणां चक्रुर्ववंदे सोऽपि तान्मुनीन् ॥ ११ ॥ अथ तत्र सभामध्ये नारायणपरायणम् ॥ सनत्कुमारः प्रोवाच नारदं मुनिपुंगवम् ॥ १२ ॥ सनत्कुमार उवाच॥ सर्वज्ञोऽसि महाप्राज्ञ मुनिमानद नारद ॥ हरिभक्तिपरो यस्मात्त्वत्तो नास्त्यपरोऽधिकः ॥ १३ ॥ येनेदमखिलं जातं जगत्स्थावरजंगमम् ॥ गंगा पादोद्भवा यस्य कथं स ज्ञायते हरिः ॥ १४ ॥ अनुग्राह्योऽस्मि यदि ते तत्त्वतो वक्तुमर्हसि ॥ नारद उवाच ॥ नमः पराय देवाय परात्परतराय च ॥१५॥ परात्परनिवासाय सगुणायागुणाय च ॥ ज्ञानाज्ञानस्वरूपाय धर्माधर्मस्वरूपिणे ॥ १६ ॥ विद्याविद्यास्वरूपाय स्वस्वरूपाय ते नमः॥ यो दैत्यहंता नरकान्तकश्च भुजाग्रमात्रेण दधार गोत्रम्॥१७॥ भूभारविच्छेदविनोदकामं तमादिदेवं रघुवंशदीपम् ॥ आविर्भूतश्चतुर्धा यः कपिभिः परिवारितः ॥१८॥ हतवान्राक्षसानीकं रामं दाशरथिं भजे॥ एवमादीन्यनेकानि चरितानि महात्मनः॥१९॥ तेषां नामानि संख्यातुं शक्यते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नारदकोटिभिः।।महिमानं तु यन्नाम्नः पारं गंतुं न शक्यते ।।२०।। मनवोऽपि मुनीन्द्राश्च कथं तं क्षुल्लको भजे।। यन्नामश्रवणेनापि महापातकिनोऽपि ये ।।२१।। पावनत्वं प्रपद्यंते कथं स्तोष्यामि क्षुद्रधीः ।। रामायणपरा ये तु घोरे कलियुगे द्विजाः ।।२२।। त एव कृतकृत्याश्च तेषां नित्यं नमोनमः ।।२३।। ऊर्जे मासे सिते पक्षे चैत्रे माघे तथैव च।।नवम्यहनि श्रोतव्यं रामायणकथामृतम्।।२४।।गौतमशापतः प्राप्तः सौदासो राक्षसीं तनुम्।। रामायणप्रभावेण विमुक्तिं प्राप्तवान्पुनः ।। २५ ।। सनत्कुमार उवाच ।। रामायणं केन प्रोक्तं सर्वधर्मफलप्रदम् ।। शप्तः कथं गौतमेन सौदासो मुनिसत्तम ।। २६ ।। रामायणप्रभावेण कथं भूयो विमोचितः ।। अनुग्राह्योऽस्मि यदि ते चेदस्ति करुणा मयि ।।२७।।सर्वमेतदशेषेण मुने नो वक्तुमर्हसि ।। शृण्वतां वदतां चैव कथा पापप्रणाशिनी ।।२८।। नारद उवाच ।। शृणु रामायणं विप्र यद्वाल्मीकिमुखोद्धृतम् ।। नवम्यहनि श्रोतव्यं रामायणकथामृतम् ।।२९।। आस्ते कृतयुगे विप्रो धर्मकर्मविशारदः ।। सोमदत्त इति ख्यातो नाम्ना धर्मपरायणः ।।३०।। विप्रस्तु गौतमाख्येन मुनिना ब्रह्मवादिना ।। श्रुतवान्सर्वधर्मान्वै गंगातीरे मनोरमे ।। पुराणशास्त्रकथनैस्तेनासौ बोधितोऽपि च ।। ३१ ।। श्रुतवान्सर्वधर्मान्वै तेनोक्तानखिलानपि ।। कदाचित्परमेशस्य परिचर्यापरोऽभवत् ।।३२।। उपस्थितायापि तस्मै प्रणामं नह्यकारि च।। स तु शांतो महाबुद्धिर्गौतमस्तेजसां निधिः ।। ३३ ।। मयोदितानि कर्माणि करोतीति मुदं ययौ ।। यस्त्वर्चितो महादेवः शिवः सर्वजगद्गुरुः ।।३४।। गौतमश्चागतस्तत्र नचोत्थापत्ततो द्विजः ।। गुर्ववज्ञाकृतं पापं राक्षसत्वेन चोक्तवान्।।३५।।भगवान्सर्वधर्मज्ञः सर्वदर्शी सुरेश्वरः ।। उवाच प्रांजलिर्भूत्वा विनयान्नयकोविदम्।।३६।।क्षमस्व भगवन्सर्वमपराधं कृतं मया।। ।। गौतम उवाच।। ऊर्जे मासे सिते पक्षे रामायणकथामृतम् ।।३७।। नवम्यहनि श्रोतव्यं भक्तिभावेन सादरम्।।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

